ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३५ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१० ई०

प्रधानसम्पादकः

प्रो० वाचस्पति उपाध्यायः

कुलपतिः

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

३५ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१० ई०

प्रधानसम्पादकः
प्रो० वाचस्पति उपाध्यायः
कुलपतिः

सम्पादकः
प्रो० रमेशकुमारपाण्डेयः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः

**कुलपतिः,**

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानित-विश्वविद्यालयः)

कुतुब इन्स्टीट्यूशनल एरिया,

नवदेहली-११००१६



ISSN :- 0974 - 8946

३५ वर्षे तृतीयोऽङ्कः (जुलाईमासाङ्कः) २०१० ई०



मुद्रकः

**अमरप्रिंटिंगप्रैसः**

दिल्ली

amarprintingpress@gmail.com

प्रधानसम्पादकः

**प्रो० वाचस्पति उपाध्यायः**

कुलपतिः

**सम्पादकः**

प्रो० रमेशकुमारपाण्डेयः

**सम्पादकमण्डलम्**

प्रो० (श्रीमती) अमिता शर्मा

प्रो० जयकान्तसिंहशर्मा

प्रो. हरेरामत्रिपाठी

**मुद्रणसहायकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनु-सन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रतिकृति प्रेषयितव्ये। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालौचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

संस्कृतमिति पदं संस्कृतभाषा-वाङ्मयोभयबोधकम्, यदुपजीव्य जीवनस्यान्तरं स्वरूपं ज्ञापयति संस्कृतिः, जीवनस्य जगतश्च परमोच्चभूमिं गतेनात्मना सात्त्विकमननचिन्तनाभ्यां यदनुभूयते "इदं विश्वस्मै विश्वाय हितकरमिदञ्च सुखकरं तत्संस्कृतौ समाविष्टम्। तपःस्वाध्यायपवित्रितान्तःकरणैः प्रबुद्धविशुद्धैः ऋषिभिरुद्भाविता भारतीया संस्कृतिः सभ्यता चोद्भावकोदारस्वभावहृदयनैर्मल्यविशिष्टाद् विश्वजनीनहिताय विश्वजनसुखाय च जाते। सा प्रथमासंस्कृतिर्विश्ववारेति प्रशस्यते विश्वैर्वरणीयेति उदीर्यते। अस्मिन् संसारे संस्कृतेः सभ्यतायाश्च कथङ्कारं विकासोऽभूदित्यर्थं वेदानुशीलनमनिवार्यं भवति। तदित्थं तदुक्तं सिद्धान्तात्मकं ज्ञानं संस्कृतिः, संस्कृतेरनुरूपं सदाचरणम्, सभ्यवेशः, मधुरं प्रियं सत्यसंलापादिकञ्च सभ्यता। ते संस्कृतिसभ्यते एकस्यैवादर्शतां गतस्य जीवनस्य आन्तरं बाह्यं स्वरूपं भवति। ज्ञानक्रिययोराचारविचारयोश्च सामञ्जस्यं सर्वत्र देशेऽत्र यदासाद्यते तदस्य पूर्णं विकासं सूचयति। ज्ञानं विना कर्म अन्धम्, कर्मणा विना ज्ञानं पङ्गु, भक्त्या विना ज्ञानं हृदयहीनं कर्म च निष्करुणं भवतीत्यत्रोपासनायां ज्ञानकर्मभक्तित्रितयस्य समरसताऽपेक्ष्यते। यदा च संस्कृतिरार्षवचननिरपेक्षा स्वभावे चागच्छति, तां पालयितुं मनः स्वतः प्रवर्तते, तदा सा सभ्यता भवति। रामायणकाले संस्कृतिरियमतीवोन्नतेति सर्वैः काव्यशास्त्रिभिः प्रवृत्तिशिक्षणाय राम एवोदाहारि-रामादिवद्वर्तितव्यमिति, रावणस्तु निवृत्तिशिक्षणायोपात्तः। तत्र काले स एकल एव, अन्ये तु तद्विपरीता केवलं तस्य भयेन तमनुसरन्ति स्म। तदेवमत्र सर्वं चिन्तनं विश्वपरकं, विश्वं हि सुरक्षितं चेत्सर्वं प्रातिस्विकं जगत् सुरक्षितमिति। विज्ञानस्योपरि अध्यात्मवादस्य नियन्त्रणमावश्यकम् तच्च स्वतोगृहीतं भवति, येन नियमिता वैज्ञानिका मानवविनाशाद् विरताः स्युः, यद्येकतो वादा संघर्षं कलहं शिक्षयन्ति, अपरतो मानवीयमावतनायाः शान्तिमुपदिशति। मानवतायाः सन्धायकमिदमुदारं संस्कृतवाङ्मयं शान्तिं जपति पठति उपदिशति चेतियं संरस्वती श्रुतिमहती न हीयताम् किन्तु महीयताम्। कर्तव्यं भवत्यस्माकं तस्या जीवातु-प्रदानेन रसायनचिकित्सया पुनर्यौवनसंपादनेनोज्जीवनमुन्मेषणं च तदपि च तस्या आश्रयभूतस्य संस्कृतस्य उज्जीवनेन संरक्षणेन च।

तद्दिशि प्रवृत्तेयं शोधप्रभानाम्नी शोधपत्रिका आन्तरदौर्बल्यमपनेतुं स्वस्थैः पथ्योपमैरौषधैर्द्यावद्वस्तु-बलोदयम्। तदस्याः प्रयासं सङ्कल्पं प्रस्तुतं च नैवद्यमङ्गीकृत्य सफलयन्तु सुधिय इति।

प्रो० वाचस्पति उपाध्यायः
कुलपतिः

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योतततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

सम्प्रति विश्वविद्यालयेषु निर्धारिता ये पाठ्यक्रमाः, तेषु अनुसन्धानात्मकः पाठ्यक्रमः मूर्ध्नि स्थितो दृश्यते। आङ्ग्लभाषायां रिसर्चशब्देन व्यवहृतस्यास्य पाठ्यक्रमस्य कृते शोधः, गवेषणा, अन्वेषणा, अनुसन्धानप्रभृतयः शब्दाः प्रयुज्यन्ते। इमे सर्वेऽपि शब्दाः प्रायः आङ्ग्लभाषायाः रिसर्च इतिशब्दमेव मनसि निधाय प्रचलिता भवन्ति। फलतः शोधस्य पाश्चात्यसरणिमेव सङ्केतयन्ति। भारतस्य प्राचीनाध्ययनपरम्परायां सूत्रग्रन्थेषु प्रच्छन्नरूपेण निबद्धानामर्थानां प्रकाशनाय सूक्ष्मविवेचनपुरस्सरमनुसन्धानं द्योतयन्तो भाष्यम्, वृत्तिः, विवृत्तिः, व्याख्या, टीका, टिप्पणीप्रभृतयः शब्दाः प्रयुक्ता दृश्यन्ते । भारतीयपरम्परायां विद्यायाः प्रवाहः गुरोः सकाशाज्जायते। अतएवोच्यते- वंशो द्विधा, विद्यया जन्मना च। विद्यावंश उत्कृष्टतरो भवति जन्मवंशात् मुखाद् जायमानत्वात्। गुरोः सकाशादधीतस्य विषयस्य अध्यापनं विधाय शिष्य ऋष्यृणान्मुक्तो भवति। गुरोः सकाशाद् विद्यां समधिगम्य शिष्यः तस्या विद्यायाः विकासाय निरन्तरं प्रयतते। विद्याऽपि क्रमश एव सिद्धा भवति। अत एव महाभाष्ये मुनिना पतञ्जलिना प्रोक्तं यत्- चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति- आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। नैषधमहाकाव्येऽपि विद्यायाः चातुर्विध्यं निर्दिष्टमस्ति। एवं सुस्पष्टमिदं यत् भारतीयपरम्परायां व्यवहारमुखा विद्या विद्यते। ऋषित्वमूला विद्या नवनवोन्मेषशालिनीं प्रज्ञां विना नैव सम्भाव्यते। तस्याः सूत्रभाष्यात्मकोऽनुसन्धानगर्भनिर्भरः प्रवाहः पाश्चात्यपद्धतिमतिशेते नितान्तम्। एवंविधायाः विद्यायाः विकासार्थं प्रतिबद्धा शोधप्रभा सततं किञ्चिन्नवीनं तत्त्वमुद्दीपयति प्रत्यङ्कम्।

विविधविषयविश्लेषपराः नव लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

प्रो० रमेशकुमारपाण्डेयः
सम्पादकः

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग

# साहित्यदर्शने नवीना उपलब्धयः

प्रो॰ रेवाप्रसादो द्विवेदी

मान्यः पट्टाभिरामो जयति बुधमणिर्यो महादेव-
पादान्मीमांसां काव्यनिष्ठां विधिवदधिजगौ योगतः काशिकायाम्।
यश्चिन्नस्वामिपादाद् दुहितरमिव तां वैदिकीं धर्मविद्यां
तस्यास्यामेव लब्ध्वा व्यलसदिव सुधीरप्ययेन्द्रो द्वितीयः।। १।।

प्रणम्य तस्मै तद्भ्राता कनिष्ठो बुद्धिचापलम्।
रेवाप्रसादस्तनुते विनयेन विदां मुदे।। २।।

मान्याः कुलपतिमहोदया विद्वांसश्च,

महत्त्वपूर्णेऽवसरेऽस्मिन्नेष जनो व्याख्यातुमत्रामन्त्रितः, इमामत्रभवतां मयि हार्दिकीं प्रीतिमेव समर्थये। एतदर्थमनुग्रहशेखरितः कृतज्ञतां निवेदयामि।

पं॰ श्री पट्टाभिरामशास्त्रिणो वेदमीमांसायामिव काव्यमीमांसायामपि निष्णाताः संप्रदायशुद्धाश्च साहित्याचार्या आसन्निति कनिष्ठतमः साहित्याचार्य एषोऽहमत्र स्वामेव विद्यां प्रस्तवीमि। पश्यामि च तत्रैवौचितीम्।

साहित्यदर्शने यन्नवीनतमं नवनीतकल्पं विमर्शजातं तत्र कल्प्यन्ते चत्वारि धामानि पञ्च च कल्पाः। तत्र यानि **चत्वारि धामानि** भवन्ति-तेषु प्रथमं

१. **काञ्चीधाम** यत्राऽभूद् दण्डी कविः, द्वितीयं

२. **शारदाधाम** यत्राजायन्त भामहमारभ्याभिनवगुप्तं यावन्महामाहेश्वरा आचार्याः, तृतीयं

३. **महाकालेश्वरधाम** यत्र त्रय एवाचार्या १. धनञ्जयः २. धनिकः ३. श्रीभोजश्च, चतुर्थं धाम पुनः

४. **काशीधाम** यत्राऽभूवन् मधुसूदनसरस्वतीपादाः, अप्पयदीक्षितेन्द्राः, पण्डितराज-जगन्नाथः विश्वेश्वरपण्डितः, स्वामिहरिहरानन्दसरस्वतीपादप्रभृतयः प्राचीनाः, भवामश्च नवीनाः

केचिदस्मादृशः। एतेषु धामसु पल्लविताः साहित्यदर्शने पञ्च कल्पाः। तेषु प्रथमः–

१. पूर्णताकल्पः दोषाभावरूपः, द्वितीयः

२. गुणकल्पः मृदु-परुषवर्णयोगरूपः, तृतीयः

३. लक्षणकल्पः अस्फुटालङ्काररूपः, चतुर्थः

४. अलङ्कारकल्पः ध्वनिगुणीभूतव्यङ्ग्यचित्रादिविच्छित्तिरूपः, पञ्चमश्च

५. साहित्यकल्पः, यत्रोद्भावयिता धाराधीशः श्रीभोजः। समाहृता अत्र प्रथमे चत्वारोऽपि कल्पाः। निम्नलिखितश्च वर्त्ततेऽत्राचार्याणां तेषां सिद्धान्तानां च क्रान्तिकरो विभागः–

**सिद्धान्ताः**

**१. पूर्णताकल्पः**

काव्यशरीर-सर्गकल्पः आचार्यो भरतमुनिः (ई.पू. ३००) सर्वे च परवर्त्तिनः। निर्दोषतायां नास्ति कस्यापि साहित्यदार्शनिकस्य वैमत्यम्।

दोषपरिहारश्च समेषामेव प्रागभावरूपः। सोऽयं निर्मातुरभ्यासः, अर्थव्यक्तिसिद्धिश्च। परिहृतावत्र न्यूनातिरिक्ततादोषौ। सा च प्रकृतिः। मातुरुदराद् बहिरायातः सर्वो हि शरीरी पूर्ण एव भवति। द्वे एवास्य डिम्भकस्य चक्षुषी, द्वौ एव हि कर्णौ, हस्तौ, पादौ च। तेऽपि च यत्र येन भाव्यं तत्रैव दृश्यन्ते व्यवस्थिताः। सेयं शारीरी पूर्णता।

अयं चाऽत्र निध्येयो विशेषो यदारम्भतः पर्यवसानं यावत् सर्वेषामेव साहित्याचार्याणां प्रथमो विचार्यविषयो दोषाभावो नाम–'काव्यम् अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ' अथवा 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमित्युभयथापि वक्तुं शक्ये काव्यलक्षणे तथैव प्रवृत्तेः। तदित्थं जातमात्र एव हि सर्वो जन्तुः पूर्णत्वावच्छिन्न एव भवति तथैव काव्यशरीरमपि पूर्णं सदेव प्रतिभागर्भतो बहिरुपयाति।

**२. गुणकल्पः**

अथारभते गुणकल्पः। परिपोषस्तत्र प्रथमः। जातो हि जन्तुः शनैः शनैर्वर्द्धते। वृद्धिर्नामाऽऽपूरः शरीरधातूनाम्। सोऽपि द्विदशः १. किञ्चिल्लक्ष्यः २. परिपूर्णश्च। मृदुकठोर-ह्रस्वदीर्घत्वादयो गुणाः पुनः शनैः शनैरुपचीयन्ते। इमेऽपि धर्माः शब्दश्चार्थश्चेत्युभयत्र लक्ष्यन्त एवेति नापलप्याः। एवं-विधान् विशेषानाश्रित्य परिकल्पितास्तास्ता वृत्तयोऽपि सुमेधोभिरुपनागरिकाद्याः।

**गुणा दोषाभावरूपा इति दोषनियतसंख्याका भरतदण्डिनोः।**

**कवित्वनिष्पत्तिः** निष्पन्नमिदानीं कवित्वम्। लालित्यादेः स्फुटमुपलब्धेः। प्रतीहारेन्दुराजादयः सूक्ष्मदर्शिन आचार्या अत्र विविक्तवाचः।

एतस्य गुणकल्पस्य प्रमुखा आचार्या भरतमारभ्य दण्डिनं यावत्, यावच्च वामनं 'सर्वेऽ-' प्याचार्याः। एतेषां महावाक्यं भवति– 'गुणः काव्यस्यात्मे'-ति, यदुच्यते वामनेन–

**रीतिरात्मा काव्यस्ये-ति विशिष्टा पदरचना रीति-रिति,**
**विशेषो गुणात्मे'-ति च।**

रीतिनिष्ठविशेष्यतावच्छेदको गुणः काव्यस्यात्मेत्यत्रार्थः। गुणः खलु काव्यस्यात्मा, तस्यैव पदरचनानिष्ठाया विशेषताया अवच्छेदकत्वादिति यो न्यायसिद्धो निगर्वस्तत्र गुणस्यैवात्मतयोच्छलितत्वात्। ततश्चार्थवादवाक्यमिदं यद् रीतिरात्मा काव्यस्ये'-ति।

## ३. लक्षणकल्पः (अस्फुटालङ्कारकल्पः)।

इदानीमपि काव्यकन्यकेयं नाध्यरुक्षद् यौवनम्। प्रतीक्षाविषय एतदिदानीमपि। क्रमेण प्राचीकटन्नस्यां वक्षोग्रन्थ्यादीनि लक्षणानि। सेयं विकासस्यारम्भभूमिः। तामिमां परीक्षका लक्षणपदाभिधेयां चक्रुः, सजातीय-विजातीयाभ्यां पृथक्कृत्य परिच्छेत्तुं शक्यत एभिः, न खलु वक्षोग्रन्थयः पुरुषकाये समुत्सेधमासादयन्तो दृष्टाः, न वा योषावपुषि द्राघिमाऽतिशयादयो धर्माः। लक्षणानीमानि प्रबन्धशरीरेपि पृथगलक्ष्यन्त यथा–धीवरवृत्तान्तः शाकुन्तले, यथा वा रज्जुहस्तपुरुषवृत्तान्तो मुद्राराक्षसे, प्रवहणपरीवर्त्तवृत्तान्तो वा मृच्छकटिके। शाकुन्तल एव सप्तमेऽङ्के सर्वदमनचापलप्रसङ्गः, स्वप्नवासवदत्ते वा सागरिका-वासवदत्तयोरन्योन्यसंस्कारोदयप्रसङ्गः। कर्पूरमञ्जर्यां महाकापालिकवृत्तान्तोऽपि लक्षणत्वेन सम्भावयितुं पूर्णत एव योग्यः। दशामिमां ध्वन्यध्वन्या अधन्या इव दूरतस्तत्त्यजुः।

## ४. अलङ्कारकल्पः (पर्याप्तिकल्पः)

अथ प्रावर्त्तत पर्याप्तिकल्पः। तदुक्तं महाकविना शैलराजदुहितृत्वभावेनाऽवतीर्णां भगवतीं त्रिपुरसुन्दरीं वर्णयता–

१. उन्मीलितं तूलिकयेव चित्रं
२. सूर्यांशुभिर्भिन्नमिवारविन्दम्,
३. बभूव तस्याश्चतुरस्रशोभि
४. वपुर्विभक्तं नवयौवनेने-'ति [कुमारसंभवे १.३२]

दशायामस्यां पार्वती तदवधि सुन्दरीमात्रमस्ति यदवधि नाधत्त पदं तस्यां त्रिपुरारि-रतिः, शुद्धा सा नालम्बनविभावः शृङ्गाररसस्य। विभावतावच्छेदकेषु स्थायिनोऽभ्यर्हितत्वात्, दुष्यन्ते साकाङ्क्षा

शकुन्तला हि नायिकाभूता शृङ्गारविभाव-भावाऽवच्छिन्ना शकुन्ला, अन्यथा कोऽस्याः प्रियम्वदाया, अनसूयाया का विशेषः। अतएव न रससूत्रे स्थायी, तस्य विभावतावच्छेदकतयैवोपलम्भात्।

अस्मिन्नेव चातुरस्त्रीशबलिते गौरीयौवने प्रादुरभूवन् सर्वेऽपि गुणाः, यदुक्तं–

**'स्वरेण तस्याममृतस्त्रुतेव प्रजल्पितायामभिजातवाचि।**
**अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना।।** इति [कुमारसं. १.४५]

अलङ्कारा 'भावो हावश्च हेला' चेत्यादयो नारीयौवने प्रादुर्भवन्तो दर्श्यन्ते 'शोभा विलास' इत्यादयश्च नरयौवने। न चेमेऽलङ्कारा बाह्या भवन्ति, भवन्ति चैत आगमापायिनः, उच्यन्ते महामतिभिरप्यलङ्कार इत्येव। ध्वनिवादे पुनरिमेऽलङ्काराः काव्यशरीरविचारप्रस्तावे न स्मृताः। एतेष्वेवालङ्कारेषु सर्वेऽपि भावा अन्तर्भवन्ति, रसाश्च। नैतेषां पार्थक्येन गणना। अत एव दण्डीव भामहः, भामह इवोद्भटः, उद्भट इव रुद्रटोऽपि सर्वानपि रसान् काव्यस्यालङ्कारानमंसत, वक्रोक्तिरप्यलङ्कार एव, औचित्यस्य-गुणत्वमेव यदि नाऽदोषत्वम्। एवं सर्वेषामेव काव्यसौन्दर्याधायकानां काव्यधर्माणाम् अलङ्कारकल्पे सङ्ग्रहः। **सेयं संपूर्णा साहित्यविद्या।**

**५. अथ पञ्चमः कल्पः साहित्यम्।** इदं हि यदाचार्योपज्ञं स खलु धाराधीशस्तत्रभवान् भोजराजः। तस्य मते द्वादशानां वाक्यार्थसम्बन्धानां संज्ञा साहित्यम्। तथाहि–

**वृत्तिर्विवक्षा तात्पर्यं प्रविभागो व्यपेक्षणम्।**
**सामर्थ्यमन्वयश्चैवमेकार्थी-भाव एव च।।**

**दोषहानं गुणादानं तथाङ्कारयोगिता।**
**रसावियोग इत्येते सम्बन्धाः कथिताः बुधैः।।** [भावप्रकाशने]

अत्र शृङ्गारप्रकाशे भोजराजः प्रथममारभ्य अष्टमं प्रकाशं यावत् एकार्थीभावं यावदष्टौ सम्बन्धान् विस्तरेण निरूप्य नवममारभ्य एकादशं प्रकाशं यावद् दोषहानादीँश्चतुरोऽपि सम्बन्धान् व्यश्लेषयत्। तमेवानुससार शारदातनयो भावप्रकाशे, साहित्यमीमांसाकारश्च। परवर्त्तिनोऽपि कतिपये भोजोपज्ञमिमं साहित्यकल्पं विजृम्भयाञ्चक्रुः ऋते ध्वनिवादिनः सर्वान्। ध्वनिवादिभिः साहित्यमिति गणिता इमे विषया अन्यथा प्रत्युपस्थापिता, येषु अन्तिमाश्चत्त्वारो दोषहानादयः सम्बन्धा एव वितत्य विश्लेषिताः, किन्तु तेषां मतौ 'साहित्य'-शब्दः कदाचित् पापशब्दः, यावत् साहित्यदर्पणस्यापि मतौ सैव प्रपत्तिः, स हि 'साहित्य'-शब्दं दशमपरिच्छेदान्त एव केवलं नामग्राहमगृह्णात्, विश्लेषणस्य तु गाथैव दूरे। सेयं संपूर्णा साम्प्रतं साहित्यगाथा।

भोजो रसस्यैव प्रकरणे दशरूपविधानमपि प्रापञ्चयत् अलक्षयत च दशभ्यो रूपकेभ्यो भिन्नानपि रूपकभेदान्, अलक्षयत च सन्ध्यवस्थार्थप्रकृतिभ्यो भिन्नानपि रूपकगताँस्=तदुपज्ञान् विशेषान्।

**अथ स्पष्टीकरणम्**

एतस्मिन् साहस्त्रीयुगं शरदां व्यतीत्य सम्पन्ने कालपर्यये केचन ग्रन्थयोऽस्माकं बुद्धिकोषे निक्षिप्ताः। न भवति नस्तदवधि तोषो यदवधि तेषां न मोकः। तथाहि–

**ध्वनिवादः**

अस्त्येकः प्राप्तभूयः-प्रतिष्ठो वादो ध्वनिर्नाम। ११५९ वर्षाणि यस्य वयः, आनन्दवर्धनः सहृदयागमकारिकासु काव्यालोकनाम्नीं वृत्तिं विधाय तम् अन्यथयाञ्चकार, अभिनवगुप्तस्तमिमं काव्यालोकं लोचनाख्येन व्याख्यानेनान्वगृह्णात्, मम्मटश्च काव्यप्रकाशेन ताविमावुभावप्याचार्यौ संप्लावयाञ्चक्रे।

एतं मतमधिकृत्य कृते विचारे शून्यमेव हस्ते पश्यामः। ध्वनिरिति संज्ञा, अत्र प्राणायिता व्यञ्जनानाम्नी व्यतिरिक्ता शब्दशक्तिः, प्राधान्याप्राधान्यव्यवस्था चेति सर्वापि संपद् बुद्बुदास्फोटनामनुहरति, नास्त्यत्र तर्कसहः कश्चन स्थिरो मेरुदण्ड इति धिक्क्रियतेऽसावद्यतनैः।

**तात्पर्यवृत्तिरभिधा लक्षणाऽनुमिती, द्विधा।**
**अर्थापत्तिः क्वचित् तन्त्रं समासोक्त्याद्यलङ्कृतिः।**
**रसस्य कार्यता भोगो व्यापारान्तरबाधनम्।**
**द्वादशेत्थं ध्वनेरस्य स्थिता विप्रतिपत्तयः।।** –(हमारा इतिहास पृ॰ १२१-२२)

इत्थं या द्वादश विप्रतिपत्तयो जयरथादिभिरुपक्षिप्ता ध्वनिवादस्ता न क्षमतेऽस्तमयितुमिति नासावत्रोपक्षिप्यते। स्मरणीयमत्र यन्नापि दार्शनिकेष्वपि कश्चन स्वीचक्रे वादमिमम्। तर्हि नाधुनिकानामपि शिरः क्लेशनीयमेतेनेत्यस्माकं प्रवृत्तिः।

यश्चासावन्यः शब्दशक्तिवादो मध्यकालभुवं तं वयमेव कामं निराकृत्य सुखं श्वसिमः। अस्त्यस्माकं कारिका–

**यदि शब्दस्य देहे स्याच्छक्तिः सूर्ये प्रकाशवत्।**
**तदा विश्वस्य भाषापि भवेदेकैव केवला।।** - कारिका १६८

इति। अथ क्वासीदसौ शब्दशक्तिवादो वेदस्यापौरुषेयतावादात् पूर्वम्। साहित्येऽपि ध्वनिकारात् पूर्वम्। यदा शब्दशक्तित्वमेव गगनारविन्दं तदा का कथा तदेकभूताया व्यञ्जनायाः शब्दशक्तित्ववादस्य।

**रसवादः**

व्यञ्जनावृत्तिमहालताया यदिदं ध्वनिनामकं विपुलोदरं कूष्माण्डं तस्यापि निर्गलितोऽर्थो रसध्वनिर्नाम। रसो हि केवलं ध्वन्यत एव, रसशब्दमालासहस्त्रजपोऽपि रसं स्पर्शयितुं न क्षमेतेति - सर्वथैवाऽवाच्य एव भवत्यसावित्येषां तर्कः। यदुच्यते ध्वन्यालोककृता १.३ कारिकाया भूमिकावृत्तौ–

**काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ।**

**तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।**
**बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः।। ३।।**

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।। ४।।**

अत्र वृत्तिः 'स हि अर्थः (प्रतीयमानार्थः) वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रम् अलङ्कार-रसादय-श्चेत्यनेकप्रभेदप्रभिन्नः। सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वम्। तथा हि आद्यस्तावत् प्रभेदः कदाचिद् वाच्ये विधिरूपे प्रतिषेधरूपः। यथा 'भम धम्मिअ०' इत्यादि। क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपः। यथा 'अत्ता एत्थ' इत्यादि। क्वचिद् वाच्ये विधिरूपेऽनुभयरूपः। यथा 'वच्च महे'त्यादि। क्वचिद् वाच्ये प्रतिषेधरूपेऽनुभयरूपः। यथा-'दे आ पसिअ' इत्यादि। क्वचिद् वाच्याद् विभिन्नविषयत्वेन व्यवस्थापितः। यथा- 'कस्सविधाः ण होइ रोसा' इत्यादि। अन्ये चैवं प्रकारा वाच्याद् विभेदिनः प्रतीयमानभेदाः सम्भवन्ति।

द्वितीयोऽपि (अलङ्काररूपः) प्रभेदो वाच्याद् विभिन्नः सप्रपञ्चमग्रे दर्शयिष्यते।

तृतीयस्तु रसादिलक्षणः प्रभेदो वाच्यसामर्थ्याक्षिप्तः प्रकाशते, न तु साक्षाच्छब्दव्यापारविषय इति वाच्याद् विभिन्न एव। अन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्, नत्वभिधेयत्वं कथञ्चित्। [ध्वन्यालोक पृ० ३५-८४, चौखंभासं-१९४० ई०]।

अन्येऽपि वाग्देवतावतारत्वेन संभाविता विषयेऽत्रैवंवचना एव मम्मटादयः। विखण्डित एष आश्रयासिद्धिकालिकयैव भद्रकाल्या रक्तबीजतुल्यकुल्यः महाविरावो वादः। अयमस्य क्षणस्य प्रसादः। महत्तमेयमुपलब्धिः। शक्यमिदानीं दार्शनिकसंसद्यवकाशं लब्धुम् आलङ्कारिकैः।

उक्तमिदं यदुद्भटादिभिरलङ्कारवर्गीयत्वेन प्रत्यपादि रसः, 'रसवद् वचः, रसवत् काव्यमि'-ति तु तेषां युक्तिसहं वचः। यथेदं तद् दण्डिनः काव्यादर्श-नाम्ना प्रतीतेन 'काव्यलक्षणं'-नाम्ना ग्रन्थेन स्पष्टम्, स्पष्टं च प्रत्यहं दीनारलक्षेण कृतवेतनस्य नूतनस्य कुमारसंभवस्य कवेराचार्यस्य उद्भटस्य ग्रन्थरत्नेन 'काव्यालङ्कारसार'-नाम्ना। तत्र हि 'रसवत्त्वमि'-ति पृथगेवालङ्कारः 'रसवदलङ्कारवर्गे'। अत्रापि रसवदिति पदं-'वच' इत्यस्य विशेषणतया प्रायोजि, किन्तु कुन्तकादिभिरत्र स्वैरत्वमाचरितम्, तथा तथा च व्याकृतमिदम्। यावदेतेषां गुरुकल्पः शान्तदान्तवचा आनन्दवर्धनोऽप्यत्र मतुपः स्थाने वतिमुपनिवेशयन् धूलीप्रक्षेपापराधान्धकूपे निपतितो लक्ष्यते।

**प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।**
**काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः।।** ध्वन्या. २.५

इति हि तस्य साहसम्। अन्येऽपि स्वैरवृत्ता एवालक्ष्यन्ताऽत्र विषये। भोजोऽप्यपराद्ध एवाऽत्र 'रसमर्हती'-ति सूत्रान्तरमुपक्षिपन्। बुद्धिविलास एषः, न शास्त्रचर्चा, ध्वंसप्रवृत्तिरियं, न तु सहृदयता, उन्मार्गपरिग्रहपापमिदं न विद्योपासना। अथवा कृतमनेन रोमन्थयोगेन भूम्ना मथितेन परित्यक्तेन चास्माभिरनेकैः सन्दर्भैः।

ननु विनीता विद्यामहे ध्वनिवादेषु। तथाहि स्वभ्यस्तमिदमस्माकं यत्–

१. रसः प्रधान एव भवति,

२. अलङ्कारः अप्रधान एव,

३. अलङ्कारः क्वचिद् विकरोत्यप्यलङ्कार्यम्,

४. गुणाः रसैकधर्माः, अनुकूलाश्चैकान्तेने-ति।

नवीनं यत् साहित्यशास्त्रं तद्धि रूढानपि ग्रन्थीनिमान् निकृन्तति। अत्यन्तमुदारं दर्शनमस्य। समर्थितमपि च तत् प्रत्नैः प्राज्ञवरैर्भोजादिभिः। तथाहि ब्रूमहे–

१. यदुच्यते रसः प्रधान एव भवति नाङ्गमिति। अत्र ब्रूमः–आत्मानं परीक्षन्तामार्याः, अथ विरुद्धमुच्यते भवद्भिः। भवन्तो ह्येव शिक्षितवन्तः 'यत्राङ्ग तु रसादय' इत्यनुपदीनेन वचनेन। मान्यं च तद् रसस्य राशिद्वयमनुध्यायताम्। कौ तौ राशी इति जिज्ञास्ये ब्रूमः १. एको राशिः आस्वादरूपः २. द्वितीयश्च आस्वाद्यरूपः। यथा चेदं तद् ध्वन्यध्वनीनानामेव वचोभिः प्रसिद्धम्।–तथाहि तत्रभवानाचार्योऽभिनवगुप्तः 'पानकरसादिषु' गुडमरिचादिव्यतिकरादुपजायमानो यः परिमलपरभागात्मा अपूर्व आस्वादः, स एव काव्यनाट्यरस इति। कोऽयं परभागः? आस्वाद एवासौ। असौ च चरमतम इति कीदृशोऽस्याङ्गभावः। प्रधान एवासौ, विगलितवेद्यान्तरत्वेन प्रसिद्धः। अमुमेव मम्मटः कवयति–'हृदयमिव प्रविशन्, अन्यत् सर्वं तिरोदधत्, सर्वाङ्गीणमिवालिङ्गन्नि'-ति।

यश्चास्वाद्यराशिको रस 'इक्षुरसा'-दिप्रयोग इव व्यवहारशुद्ध एष पुनः विभावानुभावव्यभिचारि-संयोगजन्यनिष्पत्तिकः। अत्र कश्चिदास्वाद्यो भावः कश्चिदास्वादयिता, कश्चन चास्वादः। शृङ्गारकरुणादिसंप्लवे पुनः 'अयं स रशनोत्कर्षी-' त्यादिषु प्रस्तावेषु करुणं प्रधानीकृत्य व्यज्यते तदङ्गभूतः शृङ्गारः। एष हि 'अपराङ्गव्यङ्ग्यत्वेन संभाव्यमानोऽपि न नाद्रियते सुमेधोभिः। अत्र गुणप्रधानभावो ध्वनिवादेनापि प्रकामं समर्थितः। 'प्रधानत्वमलङ्कारत्वं च परस्परं विप्रतिषिद्धमि'-ति ध्वनिवादिनामाग्रहमात्रं भवति तैरेवोपदिष्टो भावध्वनिर्यत्र रसोऽपि विवहनप्रवृत्तभृत्यसमारोहगत-राजवदङ्गत्वं न व्यभिचरति'-इति।

किञ्च येयमनुभवस्य व्रज्या तत्र प्रतिषिद्ध एवाऽनुयोगः शिष्टेषु। प्रधानाङ्गभावे पुनरनुयोगाननुयोग एषोऽवहेलितो ध्वनिवादिभिः शिष्टमिष्टैरत्रभवद्भिः। अत एव विराद्धा भवन्तो भवतामेव शिष्यैः राजशेखर-कुन्तक-महिमादिभिः क्षेमेन्द्रसहितैः। सर्वैरेभिरास्वादमाश्रित्य राशिद्वयमेवाभ्युपगतं वाङ्मयस्य काव्यमकाव्यमिति, न पुनरत्राप्युत्तमोत्तमोत्तममध्यमाधमत्वकालुष्यकमाकलितम्।

किञ्च योयमास्वादात्मा रसस्तस्याश्रयो रसिक एव। रसिकश्च न काव्यमिति धेनोः शृङ्गेणात्रभवन्तो बडवापुत्रं युयोजिषन्ति, अकाव्यतश्च कथं नाश्च्योतयन्ति समर्था भवन्तो रसम्? ननु काव्यं रसस्य व्यञ्जकं भवतीति नाऽसम्बद्धत्वमस्येत्युच्यते चेत् काव्यगतमिदमभिव्यञ्जकत्वं कुत्र वा भवन्तो गणयन्ति, गुणेषु वा, अलङ्कारेषु वा, मार्गान्तरस्याऽनुपलब्धेः। गुणा अप्यास्वादरूपा रसधर्मा भवतामिति अलङ्कार एक एव शरणमत्रभवताम्। तर्हि सुखमुच्येत 'विभावादियुक्तत्वं काव्यस्यालङ्कारविशेष इति यदुच्यते सुमेधसा तत्रभवता भोजेन रसोक्तिरिति-

**'वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम्।'**

[सरस्वतीकण्ठाभरणालङ्कारे ५.८] इति। इत्थमापततितं रसस्याप्यलङ्कारत्वम्। यदि वा-

**अलं ब्रह्म**

'अलङ्कार' इति महासंज्ञां संभाव्य काव्यविचारे तामेव प्रगुणयेः। अत एव 'काव्यालङ्कार-सार' इत्यत्रोद्भटो यं हि मथयित्वा सारं निश्च्योतयति स हि 'अलङ्कारः' काव्यधर्मसामान्यपर एव, तदर्था एव 'काव्यालङ्कार' इति व्याहारा भामहवामन-रुद्रट-महिमभट्टादीनादाय जगन्नाथपण्डितेन्द्रं यावत् 'अलङ्कारान् सर्वानपि गलितगर्वान् रचयत्वि'-ति दृश्यन्ते।

अस्ति महर्षीणामागमो यत्र 'अलंपदं' ब्रह्मणः पर्यायतयोपदिष्टम्-

**अक्षरं परमं ब्रह्म सनातनमलं विभुम्।**
**वेदान्तेषु विदन्त्येकं चैतन्यज्योतिरीश्वरम्।।** इति।
[साहित्यदर्पणे निर्णयसागरीये १९३६ संस्करणे परिशिष्टम्]।

यश्चात्र 'कार'-इति उत्तरपदं तस्य प्रत्ययत्वं वा गृह्यताम्, उत्तरपदत्वं वा, स उभयथापि स्वरूपार्थबोधक एव 'अलमित्येवालङ्कार' इति। एवं च 'अलङ्कार'-परिभाषाऽपि समग्रभरसहैव। अलङ्कारश्च काव्यधर्मतया सर्वैरेव संप्रतिपन्न इति नास्ति सङ्गतिच्छेदाघातशङ्का।

एषु दिवसेषु काव्यदर्शनमपि दार्शनिकेषु ब्रह्मवादिदर्शनत्वेन समकोटिकं संवृत्तमिति महतः प्रहर्षस्य विषयः। प्रहर्षमिममस्मद्गुरुभ्यः पं॰ श्री पट्टाभिरामशास्त्रिभ्यस्तत्संप्रदाय-मूर्धन्येभ्यश्च विद्वद्भ्यः श्रद्धाञ्जलिरूपेण विकीर्य काव्यस्यान्तिमं निष्कर्षरूपं रूपमुपस्थापयामः तथा-

**आनन्दकोषस्योल्लासे लोकोत्तरविभावना।**
**अङ्कृतार्थसंवित्तिः शाब्दी काव्यमितीर्यते।। इति।**

गतार्था अत्र पण्डितराजादीनां लक्षणं – स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकत्वसम्बन्धेन चमत्कारत्ववच्छब्दत्वमेव काव्यत्वमिति।

ननु पण्डितराजः परिष्कारेऽत्र शब्द-शब्दं न प्रयुङ्क्ते, तर्हि कथमसौ तन्नाम्ना प्रस्तूयत इति चेत् किं ब्रूमोऽतिव्याप्तिवारणाय सेयमास्माकीना पण्डितराजभक्तिः। शब्दाभावे– 'स्वं चमत्कारत्वं, तद्विशिष्टश्चमत्कारस्तज्जनकता भावनायाम्, तस्यां विषयित्वसंबन्धेन निविष्टोऽर्थस्तादृशजनकताया अवच्छेदकः, तस्यार्थस्य प्रतिपादकत्वं यथा शब्दे तथैव चित्रमूर्त्यादिष्विति शब्दनिवेशनैव रक्षा। ननु परिष्कारवचने शब्दस्य लाभः सन्दर्भत एव लभ्य इति नास्ति च्युतिरिति चेत् परिष्कारत्वं चोह्यवचनत्वं च विद्वत्सु विप्रतिषिद्धमिष्यते।

अथ कोऽयमानन्दकोषो यस्योल्लास इष्यतेऽत्रेति चेद् उपनिषदः पृच्छ। य एव तासु आनन्दकोषः स एवाऽत्रापि प्रत्यक्चैतन्यरूपमात्मतत्त्वं तु गृहाण। लोकोत्तरत्वं च प्रातिभत्वम्, काव्यार्थाः सर्वे प्रतिभास्पर्शमनवाप्य न प्रभवन्ति काव्यत्वमारोढुम्, प्रातिभश्च यो मातृपुत्रभावः स न शक्यः स्प्रष्टुं स्थूलत्वेन। तत एव काव्यसृष्टिरियं कदाचिदपि संवित्पञ्जरजात शुकीत्वं न त्यजति। यदुक्तमस्माभिः–

**काव्ये धर्माश्च धर्मी च समवायश्च तद्गतः।**
**सर्वमेतत् सदा संवित्स्वर्णपञ्जरजः शुकः।। का. १७७**

उक्तं च चित्रमूर्त्योर्व्यवच्छेदाय–

**इमां काव्यकलामेव मूर्त्तिश्चित्रं च चुम्बतः।**
**किन्तु, राधायते काव्यकृष्णे भाषैव केवला।। का. १८१।**

अमुमेवार्थं निष्कृष्य ब्रूमः–

**ज्ञानात्मकेन शब्दाख्येनार्थेनार्थान्तरात्मकः।**
**यः कश्चन चमत्कारी बोधः काव्यं स उच्यते।। १९०।। इति।**

अस्माच्च विमर्शाल्लाभोऽपि दृश्यते। तथाहि–

**काव्यस्य ज्ञानरूपत्वे रसयोगोऽपि युज्यते।**
**ज्ञानस्यापि रसस्येव चिदात्मैकात्म्यदर्शनात्।। २३३।।**

रसस्य चित्तवृत्तिरूपत्वेऽपि न क्षतिः। यदुक्तम्–

**ज्ञानस्य चित्तवृत्तित्वेऽप्यस्ति नैव रसक्षितिः।**
**रत्यादेश्चित्तवृत्तेर्हि रसत्वेनाऽभिमानतः।। २३४।।**

अयमेवार्थः प्रकारान्तरेणाऽपि प्रस्तूयते–

**आत्मवानर्थसंघातप्रकाशः काव्यमिष्यते।**
**आत्मा चालङ्कृतिः, सा च पर्याप्तिः, तत्र हेतवः।।**
**औपम्यादिर्गुणा अर्थान्तरं वस्तूक्तिरेव च।**
**वस्तूक्तिश्च विभावादिबन्धरूपा रसावहे–।।** ४, ५ कारिके। ति।

यदिदमुक्तमानन्दकोषस्योल्लास इत्यादि तत्रोल्लासं विभजन्तोऽपि कलयामहे–

**आनन्दकोषस्योत्लासस्त्रिविधः परिकीर्त्त्यताम्।**
**औपम्यादि, रसं, वस्तु वा यतो विसिनोति सः।।** २ इति।

अग्रेऽमुमेवार्थं पल्लवयामः–

**उल्लासस्त्रिविधोऽप्येष रसत्वेनैव कीर्त्त्यताम्।**
**मात्रामात्रकृतं भेदमवलम्ब्य हि भेदवान्।।** ३ का। इति।

आनन्दवर्धनः 'शब्दार्थशरीरं तावत् काव्यमि'–ति भामहस्य 'शब्दार्थौ सहितौ काव्यमि'–ति मन्त्रमन्तर्जपन्नेव वक्ति, व्याघातमिमं समर्थयँश्च काव्यलक्षणचर्चाम् 'अर्थतः' प्रारभते–

'अर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।' इति।

कथमिति लोचनकारस्तूष्णीं तिष्ठति। वयं तु चिन्तयामः 'शब्दस्य काव्ये निवेश उपाधित्वेनैव भवति न स्वरूपत्वेने'–ति। स्वरूपमेव लक्षणायते नोपाधिरिति च। अत एवावोचाम–

**एवं शब्दो बहिर्बाह्यः सन्नपि ज्ञानरूपताम्।**
**धृत्वोपाधिर्भवेत् काव्ये ज्ञानरूपे, न रूपतः।।** का. ७४। इति।

एवमेव–

**ज्ञानात्मकोऽपि शब्दः स्यादुपाधिः काव्यवर्ष्मणि।**
**पात्रं रसे पानकाख्ये दर्पणो वा तनौ यथा।।** ८६।। इति।

अथ च

**काव्ये शब्दस्य देहस्तु नैव गृह्येत जात्वपि।**
**तस्य ज्ञानं तु गृह्येत किन्तूपाधित्वमात्रतः।।१२२ का.।।**

सन्दर्भेऽस्मिन् सबहूनपूर्वान् पदार्थानुपक्षिप्यान्ते ब्रूमः–

**रसस्य या च निष्पत्तिप्रक्रिया सापि तत्स्वसा।**
**तद्विचारः पयोऽपीत्वा तत्पात्रे तक्रपातनम्।।१७२।।**

काव्ये यो रसलाभस्तत्रास्माकीना विप्रतिपत्तिः 'भ्रान्तिमात्रमि'–दमिति। तथा चोक्तम्–

**काव्ये स्फटिकपात्रे नु रसान् रश्मीन् यथा विधोः।**
**लेढुं व्यवसिताः क्षीरभ्रान्त्या बैडालिका बुधाः।।१७३।।**

**क इमान् वारयेदद्य वर्षाणां शतकानि ये।**
**व्यतिचक्रुर्मरीचिस्थैर् जलैरात्माभिषेचने।। १७४।।**

इदं चाऽत्र निगच्छामः–

**एवं नास्त्येव शब्दस्य देहे शक्ती रसो यथा।**
**तद्विचारोऽपि यः सोऽत्र करकाऽऽसारतोऽपृथक्।। १७५ का.।।**

यश्चात्रात्मतया प्रतिज्ञातोऽलङ्कारस्तस्यापि रूपविषये स्पष्टमुद्घोषः–

**अलङ्कारोऽप्यलंभावरूपो ज्ञानात्मकः परम्।**
**ज्ञानरूपे यतः काव्ये नाज्ञानात्मा भवेद् गुणः।।[८] का.।।**

रसालङ्कारयोरागमिकेऽभेदेऽपि स्पष्टीकरणार्थमुच्यते–

**काव्यं कला, कलानाथो जीवात्मा, ये च भेदकाः।**
**ते कलायामलङ्कारः, कलानाथे च ते रसः।।[९] १७६।।**

आनन्दवर्धनेन काव्यार्थे द्वैविध्यमेवानुभूतं तच्चोक्तं वाच्यः प्रतीयमानश्चेति। वस्तुतस्तु वक्तव्यं त्रैविध्यम्, शब्दमप्यादाय–

**अर्थः सहृदयश्लाघ्यः काव्यत्वेन व्यवस्थितः।**
**वाच्यः प्रतीयमानश्च शब्दश्चेति त्रिधा च सः।।[१०] १९१ का.।।**

अन्ते चोच्यते–

कवेर्बुद्धौ च वाक्ये च वाक्यज्ञाने च सुस्थितः।
अलंकृतार्थसंघातः काव्यमित्यभिधीयते।।[११] १९२ का.।। इति।

सत्यं चेदम्। अनुभूयत एवाऽस्माभिः–

यच्छ्रुतं, यत्ततो बुद्धं यच्च बुद्धं ततस्त्रिके।
शब्द आद्यः, परो वाच्यः, प्रत्येयस्तु तृतीयकः।। १।।

कदलीस्तम्भगर्भस्थपत्रालीत्वं विडम्बयत्।
अर्थत्रयमिदं काव्ये भाति गर्भाङ्कसन्निभम्।। २।। गर्भः सगर्भः।

'पूर्वपूर्वपरित्यागन्याये' शब्दः पितामहः।
पुत्रे प्रतीयमाने च पिता वाच्यः स्वयं स्थितः।। ३।।

इमां वैज्ञानिकीं कार्यहेतुधारां प्रमाणयन्।
श्रद्दध्याद् व्यञ्जनां को नु शाब्दीं शक्तिं, निराश्रिताम्।। ४।।

मायामिमां भगवतीं प्रणमाम यद्वा
ब्रह्मैव शब्द इति भावित-बुद्धिकोषाः।
राधाविरेचितमुरारिमुताश्रयेम
वृन्दावने मुरलिकाध्वनिमापिबेम।। ५।।

धन्याश्च कृष्णरसभोगविलीनसर्वकोषा भवेम मुषित-स्त्रि-नरत्वभेदाः।
स्वप्ने चरेम च धयेम विभावनां च सर्वप्रदां भगवतीं सुरभिं गृहस्थाम्।। ६।।

## साहित्यम्

साहित्यस्य गाथां शुश्रुवांसः स्मः 'श्रृङ्गारप्रकाशः' – प्रकथिताम्। तत्र यस्य येन सम्बन्ध आम्नायते स हि शाब्दिकानां पन्थाः 'शब्दस्यार्थेन, अर्थस्य वा शब्देन वाच्यवाचकभावादिरूपः सम्बन्धः। कुन्तकस्तमिममनूद्याऽपूर्वं ब्रूते। तन्मते शब्दस्य शब्दान्तरेण, अर्थस्य च अर्थान्तरेणा- न्यूनानतिरिक्तत्वमेव सङ्गतं साहित्यम्। तदुक्तमेतेन–

वाच्योऽर्थो वाचकः शब्दः प्रसिद्धमिति यद्यपि।
तथापि काव्यमार्गेऽस्मिन् परमार्थोऽयमेतयोः।।

शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः।।
साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः।। इति। (वक्रोक्तिजीविते-१)

वादेऽस्मिन्नल्पं पुष्यति बहुतरं तु हीयते। तस्मादधरोत्तरं प्रविमृश्यैवमिव लक्षयामः साहित्यम्-

काव्यं तद्दर्शनं चेति द्वितयं हि परम्परा।
साहित्यशब्दाद् गृह्णाति संस्कृते काव्यदर्शने।। २७ का.।।

सोऽयं समासः। अथास्यैव व्यासः-

रसोऽलङ्काररीती च ध्वनिर्वक्रोक्तिरेव च।
औचित्यं चेति काव्यस्य प्रस्थानानि भवन्ति षट्।। २८।।

तेषामेषां रसो रीतिरौचित्यं च ध्वनेस्तनौ।
समाधिषत, वक्रोक्तिश्चालङ्कारे व्यलीयत।। २९।।

अलङ्कारो ध्वनिश्चेति द्वयं तत् काव्यवर्त्मनि।
नारायणो नरश्चेति द्वयं यद्वदवस्थितम्।। ३०।।

यद्वाऽलङ्काररीती च ध्वनिर्वक्रोक्तिरेव च।
एकस्य पयसो धारास्तैस्तैः क्षब्दैरुदाहृताः।। ३१।।

रसस्त्वेषां फलं तच्च सामाजिकचिति स्थितम्।
एतद्विघ्नापहारो यस्तस्यौचित्यमिति श्रुतिः।। ३२।।

अस्मन्मते त्वलङ्कारः काव्यस्याङ्गस्य वीक्षणे।
ध्वनिं सोमं यथा वह्निः कवलीकृत्य राजते।। ३३।।

काव्यस्याङ्गपरीक्षायामलङ्कारो हि नस्ततः।
दिवौकसामरण्यान्यां मधुमासो यथा गुरुः।। ३४।।

ध्वनिना सुरसास्येन विपुलाभोगशालिना।
निगीर्णं निखिलं त्यक्त्वाऽलङ्कारपवनात्मजम्।। ४२।।

भूयोऽप्युच्यते–

काव्येऽलङ्कार एवात्मा स एवास्मिन् स्थितो यतः।
अन्यकायस्थितो धर्मः किमन्यत्रात्मतां व्रजेत्।। ४६।।

एष च महिमाऽलङ्कारस्यालम्भावात्मकस्य–

अलंभावो ह्यलङ्कारः स च सौन्दर्यतत्कृतोः।
विभक्तात्मा विभुर्जीवब्रह्मणोश्चिद्घनो यथा।। ४८।।

दृष्टान्तान्तरमपि–

अनलो भगवान् मूलभूतौ विश्वचमत्कृतेः।
पुष्पवन्तावभिव्याप्य यथा सम्यग् विराजते।। ४९।।

अलङ्कारोऽपि काव्यस्य तथा सौन्दर्यतत्कृतोः।
अभिव्याप्य स्थितस्ताभिस्ताभिर्व्युत्पत्तिभिर्विभुः।। ५०।।

वटस्य बीजं वृक्षश्च महाञ्छाखाशतैर्वृतः।
तस्य चित्रं च यत् तत्राऽप्यलम्भावोऽयमीक्ष्यताम्।। ५१।।

शैलः शिला तथा मूर्त्तिर्मृत्स्ना पिण्डस्तथा घटः।
एतत्त्रिकेऽप्यलंभावः सुमनोभिरवेक्ष्यताम्।। ५२।।

इत्येवं मूर्च्छितमलङ्कारतत्त्वं तथा तथा दृष्टान्तैः। व्युत्पत्तयश्चामूर्भवेयुः–

१. करणव्युत्पत्तिः अलङ्क्रियतेऽनेनेति

२. भावव्युत्पत्तिः अलङ्करणमलङ्कार इति

३. कर्त्तृव्युत्पत्तिः अलङ्करोतीत्यलङ्कारः कुम्भकार इतिवत्।

४. अलमित्येवालङ्कारः, कारस्य स्वार्थत्वात्, ओङ्कारवत्।

आभिरेवंविधाभिरन्याभिश्च व्युत्पत्तिभिः 'अलमि'–त्यस्याव्ययपदस्य पर्याप्त्यर्थकब्रह्मपरत्वं न हीयते।

रसः पर्याप्तिरूपो वा भूमभावोन्मुखोऽपि वा।
अलंरूपः, परब्रह्मानन्दस्पर्शार्थकश्च नः।। ७।।

ध्वनिवादे तिरस्कारमापिता ब्रह्मवादिता।
विप्रतीपं परावृत्य धिक्करोति तमेव हि।। ८।।

यदत्र निभृतं किञ्चित् कारणं तच्च वेद्यते।
तदेव राष्ट्रमस्माकमद्यापि क्षपयत्यलम्।। ९।।

किन्तु साहित्यशास्त्रं नो निजागम-सुरक्षितम्।
उद्धारयोगमापद् वै भूयोऽप्यद्य यदृच्छया।। १०।।

ये बौद्धा भामहे श्राद्धा वैनाशिक-मलिम्लुचाः।
सन्धिर्यस्तैर्व्यधाय्येष पूरितोऽद्य प्रबोधितैः।। ११।।

साहित्यमार्गविस्तारा बहवो भारतेषु नः।
येषु नैगमिका एव शारदामभ्युपासत।। १२।।

वैनाशिका न वै तेषां केन्द्रेषु प्रापुराश्रयम्।
महाकाल-महाधाम-प्रभृति-षु स्थितेषु वै।। १३।।

रुद्रटः प्रमुखः काव्यालङ्कार-व्याप्तिदृग् बुधः।
महाभाष्यादिसिद्धान्तानाश्रयमास सर्वतः।। १४।।

तस्यालङ्कारसन्दर्भे व्याक्रिया प्राक्तनी यथा।
प्रामाण्यमाप साहित्यस्यागमोऽपि तथा स्फुटम्।। १५।।

उद्भटो वामनश्चापि[१] महात्मानावुभावपि।
अप्रकम्प्येन योगेन सिषेवाते सरस्वतीम्।। १६।।

वर्त्तमानं युगं नूनं स्वातन्त्र्येणास्ति भासुरम्।
यत्र प्रकाशमात्रस्याभ्यर्चनं वन्द्यते बुधैः।। १७।।

यत् प्राक्तनं दूषितमेव तद् वै, सर्वं नवं किञ्च विशुद्धिमुग्धम्।
एतं हठं ध्वंसयितुं नवीना विपर्ययेष्वप्यभिमानिनः स्मः।। १८।।

प्रादूषि मध्यैः प्रथमं मतं तद् यद्यस्ति मान्यं ह्यधुनातनानाम्।
मध्येऽपि दूष्ये ननु किं प्रहारा दूष्याः सतां सत्यपरायणानाम्।। १९।।

यः स्वस्तिकं कङ्कणतां निनीषुर्यस्तत्र लोहत्वगुणं निधित्सुः।
द्वयोर्विवादे ननु को नु वन्द्यः परिच्छिदायामिह किं विमृश्यम्?।। २०।।

---

१. महात्मत्वं मन्त्रित्वेनापि।

**वाक्चतुष्टयी**

भर्तृहर्यादिभिः प्रचारितभूयिष्ठा 'परा, पश्यन्ती, मध्यमा, वैखरी'–ति वाक्चतुष्टयी साहित्येऽपि पदमाप। ध्वनिकारोऽत्र मौनमाश्रयते चतुष्टयीमिमां नामतोऽपि न स्पृशति। अभिनवगुप्तः पुनः द्वितीयस्योद्योतस्यान्ते पश्यन्तीम्, तृतीयस्यान्ते मध्यमां, तुरीयस्यान्ते च वैखरीं 'तुर्याशक्ति'–रिति नाम्ना स्मरति। तद्‌यथा–

द्वितीयस्यान्ते–प्राज्यं प्रोल्लासमात्रं सद्‌भेदेनासूत्र्यते यया।
वन्देऽभिनवगुप्तोऽहं पश्यन्तीं तामिदं जगद्।। इति

तृतीयस्यान्ते–आसूत्रितानां भेदानां स्फुटताऽऽपत्तिदायिनीम्।
त्रिलोचनप्रियां वन्दे मध्यमां परमेश्वरीम्।। इति,

तुरीयस्यान्ते च–'स्फुटीकृतार्थवैचित्र्यबहिः – प्रसरदायिनीम्।
तुर्यां शक्तिमहं वन्दे प्रत्यक्षार्थनिदर्शिनीम्।। इति।।

प्रथमस्योद्योतस्याऽवसानेऽभिनवगुप्ताचार्यः 'परा'-याः स्थाने भगवतीं प्रतिभां स्तौति–

**'यदुन्मीलनशक्त्यैव विश्वमुन्मीलति क्षणात्।**
**स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम्।।'**

इति सोऽयं माहेश्वरोऽश्वत्थः, तत्रभगवान् गीताचार्यो यमूर्ध्वमूलत्वेनाधः–शाखत्वेन च प्राप्तप्रसरमामनुते–

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवि'**–।। दिति।

अत्र क्रमविपर्ययेणाचार्यस्य देशना–'ध्वनिरूपोऽर्थः प्रतिभैकवेद्यः', यदुक्तं कारिकाकारेण–

**शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।**
**वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्।।** [१.७] इति।

अत एव च राजशेखरो भावकस्योपकुर्वाणां भावयित्रीं प्रतिभां पृथक् कृत्वाऽगणयत्, वैदेशिकेषु एवरक्राम्बी-वत्। एवरक्राम्बी हि समालोचन-शक्तिमतिरिक्तां स्वतन्त्रां च शक्तिमामनुते। भारतीयस्तन्त्रशिरोमणिरभिनवः कदाचित् त्रितयस्यापि परवर्त्तिनः शक्तिविशेषस्य मूलचक्राधिष्ठात्रीमाद्यामेवाम्बां सर्वतोभावोपजीव्यामुज्जुघोषिषति। तत एव ध्वन्यालोकनाम्ना प्रथितायां काव्यालोक-नाम्न्यामस्यां ध्वनिमीमांसामानन्दवर्धनः प्रथम उद्योते ध्वनिं लक्षयति, लक्षणेन सिद्धामिमां द्वितीय उद्योते भेदतः प्रपञ्चयति, तृतीये चोद्योते व्यञ्जकतः। अथ चतुर्थे प्ररोचनाभूतानुद्‌गारानुपस्थापयति। सोऽयं मतिसंवादो मूलेन टीकायाः।

इदञ्चाभिनवगुप्तस्य वचोविन्यासे सविशेषं निध्येयं यदसौ न ह्येव प्रायुङ्क्त पश्यन्त्यादीनां कृते 'वागि'-ति पदम्, यच्च पदमसौ प्रायुङ्क्त तद्धि 'शक्ति--रिति वा 'शिवे'-ति वा। युक्तं चैतत्। चिच्छक्तेरेवैते स्तराः। यो हि श्रोत्रेन्द्रियगोचरो व्याहारात्मा वाचः पर्ययः सोऽपि सङ्केतसहाय एवाऽत्र व्यवह्रियते। सङ्केतश्च 'अस्माच्छब्दादेषोऽर्थो बोध्य' इत्येवं बौद्धो ग्रन्थिः। बुद्धिर्ज्ञानम्, ततो ग्रन्थिरप्यसौ ज्ञानमयः, तत्र यौ ग्रन्थिरूपसम्बन्धस्यानुयोगि-प्रतियोगिनावर्थौ तावपि केवलं बौद्धौ भवतः। तदुक्तमस्माभिः--

१. उच्चार्यमाणताधर्मी शब्दो बाह्यो हि सर्वथा।
तथाप्यर्थं विना काव्यभावं नासौ प्रपद्यते।। ६९ का.।।

२. अर्थश्च शब्दसङ्केतलभ्यः काव्येऽपि दृश्यते।
सङ्केतश्चाप्यसौ ग्रन्थिरूपः शब्दार्थबोधयोः।। ७० का.।।

३. सङ्केतोऽपि ततो बोधरूप एवावतिष्ठते।
सम्बन्धो ज्ञानयोर्ज्ञानभिन्नः किं नूपपद्यताम्।। ७१ का.।।

४. शब्दः स्वबोधे संक्रान्तो बोधः सङ्केतके निजे।
सङ्केतश्च प्रबुद्धः सन् बोधमर्थस्य चुम्बति।। ७२।।

५. अर्थबोधोऽथबोधानामन्येषां सन्ततिं सृजन्।
चमत्कारामृतं प्रोक्ष्य रसिके याति काव्यताम्।। ७३।।

६. एवं शब्दो बहिर्बाह्यः सन्नपि ज्ञानारूपताम्।
धृत्वोपाधिर्भवेत् काव्ये ज्ञानरूपे, न रूपतः।। ७४।।

७. अतीतकविकाव्यानां शब्दाः स्युः कथमन्यथा।
स्वस्वलिप्यादिसम्वादादद्यश्वःकाव्यतां गताः।। ७५।।

८. मूकानां वाग्यतानां वा कवीनां काव्यवेधसाम्।
कथं वा काव्यरत्नानि क्षरन्त्यद्यापि तन्मधु।। ७६।। इति।।

काव्यस्य मानसत्वे तर्कान्तरमपि--

किमुच्येत तदा किंच कृत्वा काव्यं यदा कविः।
प्रकाशयति नान्येभ्यो न चोच्चारयते स्वयम्।। १०८ का.।।

काव्यवदेव साहित्यस्यापि मानसत्वमेव युक्तिसहम्। साहित्यदर्शने हि साहित्यपदमिदं द्विविधं सम्बन्धमेव विसिनोति--

१. शब्दार्थान्यतरप्रतियोगिकस्तदुभयान्तरानुयोगिकः, शब्दप्रतियोगिकः अर्थानुयोगिकः, अर्थप्रतियोगिकः शब्दानुयोगिकश्चेत्येकः।

२. शब्दार्थद्वयानुयोगिको गुणालङ्कारादिप्रतियोगिकश्चेति परः।

अनयोः प्रथमः पक्षः प्रायेण सर्वविदितः, काव्यप्रकाशटीकासु शब्दार्थयोर्व्यासज्यवृत्तितां दर्शयन्तस्तमिमं बहुधा प्रापञ्चयन्। द्वितीयस्तु विरलमतिगोचरः। तमिमं पक्षं राजशेखरः काव्यमीमांसायां 'पञ्चमी साहित्यविद्या, सा हि चतसृणामपि विद्यानां निष्यन्दः' इति लक्षयति च पर्यवसाने 'शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्ये-'ति। अत्र संमूर्च्छता युक्तिवादेन विविधाः संप्रदायाः प्रवर्त्तन्ते। अलमेषां प्रपञ्चेन। तदिदं प्रथममधिकरणं साहित्यदर्शनस्य।

## २

### अथ नाट्याधिकरणम्

नाट्यं पृथगधिकरणं साहित्यदर्शनस्य। अत्रापि वर्त्तमानस्य संस्कृतयुगस्य वर्त्तन्ते नवीना उपलब्धयः। स्थालीपुलाकतया तु काश्चन प्रस्तवीमहि।

### सन्धिः

सन्ति नाट्यकथावस्तुनि प्रसिद्धाः पञ्चसन्धयः। १. मुखं २. प्रतिमुखं ३. गर्भः ४. विमर्शः ५. निर्वहणम् इति। एषां सामान्यं लक्षणं किमिति प्रश्ने भरतमुनिमारभ्य धनञ्जयं यावद् भूयांस्येव प्रस्थानानि। तथाहि—

'अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सती'-ति दशरूपके तत्रभवान् धनञ्जयः। अत्र को वान्वयस्य प्रतियोगी कश्चापरोऽनुयोगी-ति जिज्ञास्यं स्पष्टं नास्ति। ततश्च तथा तथा कल्प्यते। तथाहि वस्तुनि पञ्च अवस्था भवन्ति—'आरम्भो यत्नः प्राप्त्याशा नियताप्तिः फलागम' इति, एवमेवार्थप्रकृतयोऽपि पञ्चैव भवन्ति— 'बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः' अर्थप्रकृतयः पञ्च, इति। अथानयोरेकैशः संधानाद् ये कथार्थानुच्छेदा निष्पद्यन्ते ते भवन्ति पञ्चैव सन्धय' इति। यथोच्यते दशरूपक एव—

> **अर्थप्रकृतयः पञ्च पञ्चावस्था-समन्विताः।**
> **यथाक्रमेण जायन्ते मुखाद्याः पञ्च सन्धयः।।' इति।**

ततश्चायं निष्कर्षो यत्—

१. आरम्भः + बीजम् = मुखम्

२. यत्नः + बिन्दुः = प्रतिमुखम्

३. प्राप्त्याशा + पताका = गर्भः

४. नियताप्तिः + प्रकरी = विमर्शः

५. फलागमः + कार्यम् = निर्वहणम्

इत्येवं पञ्चकद्वयं सन्धिपञ्चकं निष्पादयतीति।

अथ प्रश्नः। पञ्चभ्योऽर्थप्रकृतिभ्यः पताकाया वैकल्पिकत्वमपि–'पताका स्यान्नवा क्वचिदि'–ति। पताकावत् प्रकर्या अपि विकल्पः शक्य उत्प्रेक्षितुम्। अथ कथं दृष्टान्तसङ्गतिः? दृष्टान्तत्वेनोपक्षिप्तो बीजफलन्यायः। बीजमेव काण्डप्रशाखापल्लवादिपरिणामान्ते फलायत इति सार्वजनीनम्, न तु मध्ये कस्याप्यङ्गस्य विकल्पोऽत्र सोढुं शक्यः। तथा सत्यखण्डितप्रसराया बीजधाराया विच्छेदात्।

अयमपि चात्र दुरुत्तरः प्रश्नो यत् सन्ध्यवस्थार्थप्रकृतीनां परस्परं भेद इति। अत्राधुनिकाः समादधते– [नाट्यशारीरक-कारिकया]

**यत्नावस्था फलावस्था काव्यावस्था यथाक्रमम्।**
**अवस्थेत्युच्यतामर्थप्रकृतिः सन्धिरेव च।।** नाट्यशा० ८।। इति।।

अयमर्थः– एकस्यापि यत्नस्य त्रिधा फलन्ति परिणामाः। तत्राद्यो यत्नगतः तस्यारम्भ इत्यादीनि नामानि, द्वितीयः फलगतः, तस्य यत्न इत्यादीनि नामानि, तृतीयश्च काव्यसंहितागतो यस्य परिच्छेदानुच्छेदविमर्शादयो नामानि भवन्ति। तान्येव नाट्यवस्तुनि सन्धिरित्युच्यन्ते। एवं च यान्येवाङ्गानि यत्नगतत्वेनावस्थेत्युच्यन्ते, फलगतत्वेनार्थप्रकृतिरिति, तान्येव काव्यगतत्वेन सन्धिरिति। इदं चाऽत्रावधेयं यन्नाट्यशास्त्रकृन्महामुनिर्भरतो नाट्यशास्त्रस्यारम्भादन्तिममध्यायं यावन्नाट्यालेखं 'काव्यमि'–त्येव केवलं व्याहरति। तस्माद् युक्तमुच्यते काव्यावस्थेति।

अथ यत् तावदुदाहरणत्वेनाऽत्र गृहीतं तद्धि रामायणगतं वस्तु, यत्र प्रधानं वृत्तं रामस्य प्रासङ्गिकं च सुग्रीवादेः। अत्र पताकावृत्तत्वेन सुग्रीववृत्तं गृह्यते। शाकुन्तलवस्तुनि पुनस्तादृशं प्रासङ्गिकं वृत्तं नास्तीति पताकावृत्तस्य प्राप्तं वैकल्पिकत्वमिति विकल्पे बीजफलन्यायो न सञ्जाघटीतीति भूयोऽपि काठिन्यमेव। अत्र नाट्यानुशासने नवीनो दृष्टान्तकल्पः। तदुक्तम्–

**अमुख्ययोजनां मन्ये न्यायद्वयसमाश्रिताम्।**
**बीजाङ्कुर-नदीनद्यन्तर-न्यायौ च ताविमौ।।** ना. शरा. २८।।

तत्र द्वितीयस्य स्पष्टीकरणं–

**नदीनद्यन्तरन्यायान्मुख्याऽमुख्यभिदा तु या।**
**कथाकथान्तरद्वन्द्वस्तया कामं निरूप्यताम्।। २९।।**

नद्यां नद्यन्तराणीव कथायां संपतन्तकि।
कथान्तराणि तानि स्युर्भिन्नस्त्रोतांसि मुख्यतः।। ३०।।

यथा रामायणे बालिसुग्रीव-शबरी-कथाः।
कथा वा मकरन्दस्य मालतीमाधवे यथा।। ३१।।

यस्मिन् कथान्तरं नास्ति काव्ये तस्मिँस्तु केवलः।
बीजाङ्कुरफलन्याय एव मान्यो मनीषिभिः।। ३२।।

बीजं बिन्दुपताकादिक्रमाद् याति फलात्मताम्।
अतो बीजाङ्कुरन्याय एव मुख्यो विचारणे।। ३६ का.।। इति।।

अन्ते सन्धिलक्षणं निष्कृष्यते–

बीजारम्भौ बिन्दुयत्नौ पताकाप्राप्तिसंभवौ।
प्रकरीनियताप्ती च कार्य-कार्यागमौ तथा।। ४१।।

निर्मिमाते कथांशं यं स सन्धिरिति कथ्यते।
यथाक्रमं मुखाद्याश्च तस्य भेदाः प्रकीर्त्तिताः।। ४२।।

अत्र किं तावत् सन्धित्वमिति जिज्ञास्ये–

१. सन्धीयमानेतिवृत्तखण्डत्वमिति भोजाभिनवगुप्तप्रभृतयः।

२. तदिव सम्बन्धविशेषत्वमपि तदिति च धनञ्जयः।

तत्र प्रथमे सम्बन्धत्वमेव प्रतियोगिताया अवच्छेदकम्, इतिवृत्तखण्डत्वं चानुयोगितायाः। ततश्च–

सम्बन्धविशेषत्वावच्छिन्न-प्रतियोगितानिरूपितेतिवृत्तखण्डत्वावच्छिन्नाऽनुयोगिताकः संसर्गविशेषः सन्धिः, तत्त्वं च सन्धित्वमिति पर्यवसितम्।

अपरत्र च प्रतियोगिताया इवाऽनुयोगिताया अप्यवच्छेदकमर्थत्वम्, अर्थत्वं च प्रयोजनत्वम्। प्रयोजनानि च द्विविधानि १. मुख्यानि २. अवान्तराणि चेति। तत्र गौणमुख्ययोर्मुख्यस्यैव प्राधान्यं समुचितमिति मुख्यार्थमेवाऽनुयोगिताया अवच्छेदकं गौणार्थत्वं च प्रतियोगिताया इत्युन्नेयम्। एवं हि–

गौणार्थत्वावच्छिन्नप्रतियोगितानिरूपितमुख्यार्थत्वावच्छिन्नानुयोगिताकः संबन्ध एव सन्धिः, तत्त्वं च सन्धित्वमिति निरूपणीयं भवति।

पक्षद्वयस्याप्यस्याऽभ्युपेयत्वं तत्त्व–व्यवहाराभ्यां समर्थितम्। तथाहि– तत्त्वदृशा सम्बन्ध एव सन्धिः, व्यवहारदृशा पुनः सन्धीयमाना अंशाः। अस्ति च व्यवहारः सुश्लिष्टमिदं पुण्डरीकमिति सुसंदृब्धैषा स्रगिति, चर्चितचन्दनमिदमलिकमिति च। अत्र च सम्बद्धानामेव प्रशस्तिः, न तु सम्बन्धमात्रस्य तदविनाभूतस्य। [नाट्यशारीरकम् ४२ का.]।

अस्ति चाद्यतनानां सन्धिसंख्यायां प्रकल्पः 'त्रय एवामी पर्याप्ताः, अलं पञ्चभिरि'ति। तथा च–

**तिस्र एव त्ववस्थाः स्युः प्रमुखास्तद्वदेव च।**
**अर्थप्रकृतयस्तिस्त्रस्त्रय एव च सन्धयः।।** ४३ का. ना.शारी.

एतदेवोपष्टम्भयन्तो ब्रूमहे–

**बीजारम्भमुखं बिन्दुयत्नप्रतिमुखं तथा।**
**सोपसंहृतिकौ सन्धित्रयं कार्यफलागमौ।।** ४४ ना.शारी.

पूर्वगर्भितत्वं परस्येति क्रमे निर्वहणे मुखादीनां समाहारोऽप्यत्र तर्कसिद्धः।

यौ च द्वौ सन्धी अत्र तितिक्षितौ तौ काविति प्रश्ने 'प्रतिमुखं' विमर्शश्चे'–ति गृहाण। तदुक्तं–

**मुखे प्रतिमुखं गर्भे विमर्शश्च विलीयते।**
**सन्धीनामपि पञ्चानां त्रैविध्यं गुणवत् ततः।। ४९।।**
**एवं सन्धाववस्था स्यादवस्थायामथो भवेत्।**
**अर्थप्रकृतिरेतच्च त्रितयं काव्यविग्रहे।। ५०।।**

**अथ रङ्गमण्डपः**

भरतेन मुनिना मध्यमप्रमाणो विकृष्टो रङ्गमण्डपो मानुषेभ्यः सौकर्यभाजनतया प्राशंसि, पर्यवर्जि च सनियमम्–

**अत ऊर्ध्वं न कर्त्तव्यः कर्त्तृभिर्नाट्यमण्डपः।**
नियमश्च कृतः **'रक्ष्ये तु श्रव्यदृश्यते' इति।** ६६ भरतदर्शने।

पुनश्च विकल्पितम्–

**महाप्रभाभिविद्युद्भिर्ध्वनियन्त्रैर्महारवैः।**
**वास्तुस्थापत्यशिल्पैश्च सूक्ष्मश्लक्ष्णैरिदं युगे।। ६७।।**

मानुषा अपि देवत्वं प्राप्ताश्चित्रपटार्चिषाम्।
वितानैर्विप्रकर्षेऽपि सन्निकर्षञ्च लम्भिताः।। ६८।।

ततश्च मध्यमस्यैव प्रमाणस्य हठो न मे।
सम्प्राप्तेऽपि महापोते संरम्भ उडुपाय सः।। ६९।।

उच्यते चाग्रे–

अभावं प्रतिपन्नेषु निमित्तेषु तदाश्रिताः।
नियमा अपि जायन्ते त्याज्या एव स्वतः स्फुटम्।। ७०।।

इदानीं स्वतन्त्राः स्मः प्रतिबन्धविशेषात्, क्षमामहे च स्वैरमाचरितुं रङ्गमण्डपनिर्माणे। अन्यत्रापि प्रतिबन्धेषु प्रतिबन्धकापायं वीक्ष्य लभ्येत मुक्तिः प्रतिबन्धेभ्यः। नाट्यशास्त्रमपि शास्त्रमेव तर्हि तस्य विधिषु निषेधेषु च मीमांसान्याया मार्गं दर्शयेयुरेव। सोऽयं मीमांसान्यायोऽद्यतनानां नाट्यप्रयोक्तृणां महते उपकाराय कल्पेत यद्यभ्यस्येत।

अथ च नाट्यशास्त्रं हि आगमशास्त्रमिति तत्र शक्यसम्भवा नूतना अपि विधा विनियोक्तुम्। ततश्च नास्ति कस्यापि विधेरनिवार्यत्वेन स्वीकृतेर्बाध्यता।

**ग्रन्थसंपादनम्**

प्राचीनग्रन्थसम्पादनमपि साहित्यदर्शनस्य महत्त्वपूर्णमत्यावश्यकश्च विषयः। तत्रापि सम्पादनसप्तति' नामकं ग्रन्थं रचितवद्भिरस्माभिरनेके विकल्पा उपस्थापिताः, विशेषतस्तेषां ग्रन्थानां येषां मूल आलेखो न लभ्यते। सर्वमेव तत्रानुमानिकं भवति। आनुमानिकत्वे तर्क एव सहायः। पूर्वापरसङ्गतिस्तर्केष्वपि साहायकमाचरति। एवं सति मूलग्रन्थो यस्यां लिपाववतीर्णस्तस्या अप्यभ्यास आवश्यको भवति। तत एवास्माकीना प्रतिपत्तिरभिज्ञानशाकुन्तलनान्द्यां– 'प्रत्यक्षाभिः प्रपन्नाँस्तनुभिरवतु वस्ताभिरष्टाभिरीश' इति। अत्र सर्वत्रैव पाठः 'प्रपन्न' इति, पूर्वदेश्यैस्तस्यैव 'प्रसन्न' इति विपर्ययः कृतः। 'प्रपन्नः' 'प्रसन्न' इत्युभयमपि विशेषणमपुष्टत्वदोषदूषितं भवति अनयोर्व्यतिरेकोऽपि न कल्पते वाक्यार्थस्य हानये। प्रपन्नाँस्तनुभिरिति पाठः पुनर्ब्राह्मीलिपिसमाश्रितः। तत्र ⊥ इति'न्न' इति लिख्यते। ⊥ं इति 'न्नांस्त' इति। अत्र सुलभ आकारमात्रायामनुस्वारचिह्नस्य च शीघ्रलेखे त्यागः। एतेन रक्षालाभाय ईशं प्रति प्रपत्तियोगोऽपि लभ्यते 'प्रपन्नान् शरणमुपेतान् व ईशः अष्टाभिः प्रत्यक्षाभिस्तनुभिरवत्वि'–ति प्रार्थना सफलायते। ननु 'प्रपन्न' इति पदादपि 'युष्माभिः' प्रपन्नः प्रपत्तियोगेनाश्रित ईशो वोऽवत्विति–नास्ति तथा लेखकल्पनस्यावश्यकता' इति चेत् एष एवार्थो द्वितीयान्तेन पाठेन स्पष्टतमत्वेन सुलभायते, अन्यथा प्रत्यक्षाभिरिति तृतीयान्तरेणान्यत्र नीयते प्रपत्त्यर्थः, तत एव प्रसन्न इति पाठभेदः।

संपादननियमेषु ग्रन्थसंख्याबाहुल्यमप्युपेक्ष्येत यद्येकत्रापि ग्रन्थे सङ्गतोऽर्थो लभ्यते। अत एव 'कामार्त्ता हि प्रणयकृपणाः' इति पाठे प्रणयपदमेव याचनारूपस्य प्रथमवाक्यार्थस्य समर्थनं क्षमत इति

स एव पठितोऽस्माभिः, मल्लिनाथमुपेक्ष्य, अपेक्ष्य च वल्लभ-दक्षिणावर्त्तनाथ-स्थिरदेव-पूर्णसरस्वतीटीकाः, तत्र सर्वत्रैव 'प्रणय'-शब्दस्यैव लाभात्।

संपादनाकार्यस्य कृतेऽस्माभिः काशीहिन्दूविश्वविद्यालयतः १९८६ संवत्सरे द्वितीयं वारं प्रकाशिताया कालिदासग्रन्थावल्या भूमिकायामनेकानि सूत्राणि सन्ति मुद्रितानि नाट्यशास्त्रसंपादनान्तेऽपि सूत्राणि तानि सुलभानि। सूत्रमेकमत्र स्थालीपुलाकयन्तु

**चत्वारश्चेच्चतुर्भिः कथमपि घटिताः पाठकैः पाठभेदाः**
**युक्तश्चेत् पञ्चमः किं न घटयितुमसौ शक्यते पञ्चमेन।**
**नायं स्वैरत्वदोषः कविवचसि भृशं संस्तुतानां तदीये-**
**ष्वर्थेष्वभ्यन्तराणामथ च सुमनसां त्वेष संवादयोगः।।** इति।।

एवंविधा अनेके विषयाः संपादन-संपत्तये ग्रन्थेऽत्र दत्ताः। अथ निवेदयामि यदेभिर्निकषैः कालिदासग्रन्थावल्या द्वितीये संस्करणे यानि पाठपरिवर्त्तनानि स्वमत्याऽस्माभिः परिकल्पितानि तानि अमेरिकासु प्रतिष्ठिततमस्य हार्वर्डविश्वविद्यालयस्य ग्रन्थागारे सुरक्षितेषु पाण्डुग्रन्थेषु सुलभान्यपि। तेषां चित्राणि कालिदासग्रन्थावल्यास्तृतीये संस्करणेऽस्माभिर्दत्तान्यपि। इदमत्र विज्ञेयं यत् तत्रत्या ग्रन्था भारतत एव गताः, केचिज् जयपुरतः केचित् पुनर्गुर्जरतः।

प्राकृतस्य संपादनाय कालिदासतः पूर्ववर्त्ती नाट्यशास्त्रस्य सप्तदशोऽध्याय आश्रितः, हेमचन्द्रादीनां परवर्त्तित्वात्।

**सौन्दर्यम्**

सम्प्रति 'सौन्दर्यम'-पि साहित्यदर्शने विचार्यते। वामनेन स्पष्टमेव 'सौन्दर्यमलङ्कार' इत्यलङ्कारस्य सौन्दर्यरूपत्वं कण्ठरवेणैवोक्तं तथाप्येकवारमेव, पश्चात् तदर्थं शोभा-पदं तेन दण्डिनेव प्रयुक्तम्। तत्र कामधेनुकारेण सौन्दर्यमलङ्कार इत्यस्य सूत्रस्य कामधेनावलङ्कारपदेन गुणोऽपि जिघृक्षितः कथितः ततश्चोन्नेतुं शक्यं यद्धि पर्याप्तिजनकं तदेवालङ्कारतत्त्वं तदेव च सौन्दर्यमिति। वर्त्तमाने युगे पुनः सौन्दर्यमधिकृत्य बहुभिर्विद्वद्भिः पृथग् ग्रन्थाः प्रकाशिताः- तेषु डॉ० गोविन्दचन्द्रपाण्डेमहोदयस्य 'सौन्दर्यदर्शनमीमांसा' एको ग्रन्थ 'सौन्दर्यकारिका' नामाऽपरो ग्रन्थो डॉ० जगन्नाथपाठकस्य। अस्माभिरपि सौन्दर्यं सौन्दर्यकारिकया लिलक्षिषितम्। तत्र 'कलासमाधि'र्नाम यो नाट्यानुशासनस्य चतुर्थ उन्मेष-स्तत्रापि सौन्दर्यतत्त्वं विचारितम्। निष्कर्षस्त्वयमेव यत् सौन्दर्यं नाम विषयगतो द्रष्टृकरणप्रत्याहारजनको विशेषः। तदुक्तम्-

**विषयानभि धावताममीषां करणानां प्रति या चितिं प्रवृत्तिः।**
**ननु सा प्रतिपाद्यतेऽभियुक्तैरपरोक्षानुभवात्मनाऽऽत्मभूतेः।। १०।।**

कलया तनुभङ्गिमाक्तगात्र्या यदि वा कण्ठरुति प्रकल्पधणात्र्या।
रस-भाव-विभावना-तिशीति-प्रतिपत्त्याऽऽह्रियते तु भावकात्मा।। ११।।

यदिदं हरणं तदेव किञ्चिन्निभृतं हन्त रहस्यमेव बुद्धेः।
प्रतिष्ठिति यत् समासु नित्यं व्यभिचारेण विना कलास्वमूषु।। १२।।

अत्र विकल्पचतुष्टयेऽपि प्रमाणं तत्रभगवान् योगशास्त्रप्रणेता महामुनिः पतञ्जलिः। उच्यते हि तेन-

तत्र सौन्दर्यस्य को न्वाधार इति प्रश्ने समाधये भूमिकाबन्धः-

नट-नर्त्तक-गायन-प्रयोगेष्वभिरूपेष्वभिरूपताप्रसूर्या।
ननु तत्र कला-कलापि-पत्न्यां भजते किं ननु वासयष्टिभूयम्।। १।।

अथात्रोत्तरे विकल्पः-

यदि भावकचेतनैव तस्यै भजते काञ्चन वासयष्टि भूयम्।
भजते ननु कौतुकं पुनर्नश्चितिरस्यापि रहस्यमाजिघृक्षुः।। २।।

भरताभिनवादीनत्रोत्तरात् तटस्थाननुवीक्षामहे-

भरतोऽभिनवोऽथ पण्डितेन्द्रोऽप्यनुभोजोद्भटवामनादिसूक्ताः।
दधतेऽत्र समौचितीसमिद्धं न समाधिम्....।। ८।।

अथ समाधिः कुत्रेति जिज्ञास्ये- 'प्रविहाय पन्नगेशम्'।। ८।। इति।। अत्र पन्नगेशो महर्षिः पतञ्जलिर्यो हि द्रष्टा योगदर्शनस्य। तस्याऽत्रोत्तरम्-

वदतीह पतञ्जलिः 'सचेतःकरणप्रत्यवहार'-मात्रयाऽस्मिन्।
क्रियते व्यतिभेद आत्मनीनः सकलानामपि गात्रचेष्टितानाम्।। ९।।

ततश्च- 'करणप्रत्याहारौपयिकोऽङ्गगतो विशेषः सौन्दर्यम्'-इति।
सौन्दर्यस्य तटस्थमेव लक्षणं कर्त्तुं शक्यम्। पर्यन्ते तस्यैव रसत्वमापतति।।

स्वातन्त्र्यसम्भवे प्रेष्ठः शास्त्री लालबहादुरः।
तन्नाम्नि विद्यापीठेऽस्मिंस्तस्मै त्वेषोऽञ्जलिर्मम।। २१।।

पट्टाभिरामः शास्त्री च मिश्रः श्रीमण्डनस्तथा।
वाचस्पतिरथो रेवाप्रसादश्चैक-गोत्रजाः।। २२।।

**प्रवर्द्धतां गोत्रमिदं शुभं नः सनातनीं भावकतां दधानम्।**
**प्रभुञ्जतां काव्यरसायनञ्च समोऽपि लोकः प्रतिभा-समृद्धः।। २३।।**

**सहायकाः सन्दर्भाः–**


१. काव्यालङ्कारकारिका कालिदाससंथानम्, वाराणसी–५, (२००१)

२. भरतनाट्यशास्त्रम् I.I.A.S शिमला (२००७)

३. नाट्यानुशासनम् कालिदाससंस्थानम् वाराणसी (२००८)

४. शृङ्गारप्रकाशः I.G.N.C.A. देहली, (२००७)

५. काव्यप्रकाशः काशीहिन्दूविश्वविद्यालयः (१९८१)

६. भावप्रकाशः B.O.R.I., बड़ौदा

७. ध्वन्यालोकः चौखम्भा, वाराणसी–१, (१९४०)

८. ध्वन्यालोकलोचनम् चौखम्भा, वाराणसी–१, (१९४०)

९. साहित्यशारीरकम् सं.स.वि.वि, वाराणसी (१९९८)

१०. कालिदासग्रन्थावली (तृतीयं संस्करणम्, उज्जैनम्) (२००८)

११. संपादनसप्ततिः कालिदाससंस्थानम्, वाराणसी, (२००५)

१२. अलं ब्रह्म कालिदाससंस्थानम्, वाराणसी, (२००५)

१३. सौन्दर्यपञ्चाशिका कालिदाससंस्थानम्, वाराणसी, (२००५)

१४. साहित्यदर्पणः निर्णयसागरः, मुम्बई, सन् (१९३६)

१५. काव्यादर्शः दण्डी

१६. काव्यालङ्कारः रुद्रटः

१७. वामनस्य काव्यालङ्कारसूत्रवृत्तिः कामधेनुसहिता

१८. भामहालङ्कारः

१९. संस्कृकाव्यशास्त्र का आलोचनात्मक इतिहास (२००७)

# आनन्दवर्धनात्प्राक्काव्यदोषाणां निर्धारणम्

डॉ. उमाकान्तचतुर्वेदी

(क्रमशः)

अश्लीलार्थत्वदोषश्चतुर्थः। यद्यपि वामनाचार्यप्रोक्तोऽश्लीलार्थत्वदोषो भरतोक्तेन भिन्नार्थेन, भामहोक्तेनार्थदुष्टेन श्रुतिकटुत्वेन च साम्यमुपैति, तथापि वैज्ञानिकवर्गीकरणपूर्वकं दोषोपस्थापनं पूर्ववर्तिष्वाचार्यग्रन्थेष्वविद्यमानमित्यस्य दोषस्य नूतनतयोद्भावनमेव सम्भावयामः। ब्रीडाजुगुप्सा-अमङ्गल-वाचकत्वादयः त्रिविधः। उदाहरणानि चैषां क्रमेण हिरण्यरेताकपर्द-संस्थितेति पदानि। क्लिष्टत्वदोषलक्षणं भामहवदेव। तथा हि-**व्यवहितार्थप्रत्ययं क्लिष्टम्।**[1] पूर्ववर्त्याचार्याणामिवायं केवलं व्यवहितार्थप्रतीतावेव क्लिष्टत्वं नोररीकरोत्यपितु व्यवहितार्थप्रतीतौ कारणीभूतमरूढार्थमपि निर्दिशति-**अरूढार्थत्वात्।**[2] किञ्चाप्रसिद्धिवशादपि अर्थप्रतीतौ व्यवधानञ्जायत इति ग्रन्थकृदाशयः।

(३) **अर्थदोषाः** चापि अपार्थ-नेयार्थ-गूढार्थ-अश्लीलार्थ--क्लिष्टार्थाख्याः पञ्च सन्ति। एतेषां विषये पूर्वाचार्यैर्व्याख्यातत्वान्नेह प्रतन्यते।

(४) **वाक्यदोषा** भिन्नवृत्त-यतिभ्रष्ट-विसन्धीत्याख्यास्त्रयः। उक्तञ्च- **भिन्नवृत्तयति-भ्रष्टविसन्धीनि वाक्यानि।**[3] वामनाचार्यः पूर्वाचार्यैरङ्गीकृतं भिन्नवृत्तयतिभ्रष्टयोरैक्यं स्वीकरोति, तयोः परस्परं लक्षणाभेदात्। उक्तञ्च- **न लक्ष्मणः पृथक्त्वात्।**[4] भरतभामहाभ्यामपि विसन्धिदोषो वर्णितः, अतः पूर्वपरम्पराप्राप्तोऽयं दोषस्तथापि वामनः पदसन्धौ विरूपतामभिलक्ष्य विश्लेषाश्लील-कष्टत्वरूपान् त्रीन् भेदानङ्गीकरोति। सन्धिप्रयोगस्थले तदकरणं विश्लेषः। सन्धिविधानेनासभ्यार्थ-प्रतीतिरश्लीलः। सन्धिकरणेन विषमत्वप्रतीतिःकष्टत्वम्। तथा चोक्तम्- **विरूपपदसन्धिर्विसन्धिः। पदसन्धिर्वैरूप्यम्। विश्लेषोऽश्लीलत्वं कष्टत्वञ्च। विश्लेषो विभागेन पदानां संस्थितिरिति। अश्लीलत्वमसभ्यस्मृतिहेतुत्वम्। कष्टत्वं पारुष्यमिति।**[5] भामहस्य कल्पनादुष्टं वामनस्याश्लीलत्वञ्च प्रायेण समानम्। तयोरुदाहरणमपि समानम्। तथाहि- स शौर्याभरणो यथेति काव्यालङ्कारे[6], विरेचकमिदं नृत्तमाचार्याभासयोजितमिति काव्यालङ्कारसूत्रवृत्तौ।[7] किञ्च वामनोऽश्लीलाख्यं पदार्थदोषं त्रिभिर्विभज्याश्लील-सन्धेरपि ब्रीडाजुगुप्सामङ्गलानां क्रमेण त्रिरुदाहरति। भामहस्तु कल्पनादुष्टस्योदाहरणे केवलं ब्रीडादायि-नमश्लीलदोषमेवोदाहरति। अतोऽन्ये द्वे उदाहरणे वामनस्य स्वोपज्ञे मन्तव्ये। एवमनेन त्रीनपि वाक्यदोषान् सोदाहरणं प्रतिपाद्य एतावश्लीलत्व-कष्टत्वदोषौ सोदाहरणं वाक्यगतत्वेनाप्यङ्गीकृतौ। उक्तञ्च-**अन्त्याभ्यां वाक्यं व्याख्यातमिति।।**[8] एवमयं प्रकारान्तरेण वाक्येऽपि पञ्च दोषानङ्गीकरोति।

१-८. काव्यालङ्कारसूत्रवृत्तिः (वामनः) क्रमशः- २/१ पृ.-७३, पृ.-७४, २/१/११, २/१/१२, २/१/१३, पृ. २७७, २/१/१५, २/११३, २/१/२१, २/२/१, २/२/६, २/२/७, २/२/८, २/२/९, २/२/१०, २/२/११, १/५/२, २/२/१०, २/२/२२, २/२/९, २/२/२, २/२/२४, २/२/२१, पृ.-२१, ३/१/२१, ३/१/२३, ३/१/२४, पृ. २०१-२०९

(५) **वाक्यार्थदोषा** च व्यर्थ-एकार्थ-सन्दिग्ध-अप्रयुक्त-अपक्रम-लोकविरुद्ध-विद्याविरुद्धाख्याः सप्त वामनेनाङ्गीकृताः। तथा च सूत्रम्- **व्यर्थैकार्थसन्दिग्धाप्रयुक्तापक्रमलोकविद्याविरुद्धानि।**[१] एषु व्यर्थैकार्थापक्रमेति त्रयो दोषा दण्डिभामहाभ्यामभिन्नतयैवोक्ताः। सन्दिग्धस्यापि भामहोक्तेन ससंशयेन साम्यम्। तथा हि- **संशयकृत् सन्दिग्धमिति**[२] वामनः। **ससंशयमिति प्राहुस्ततस्तजननं वचः। इष्टं निशातमे वाक्यं न दोलायेत तद्यथा।**[३]

वामनेन विद्याविरुद्धदोषे भामहोक्तस्य देशकालविरोधदोषेण सह स्वभावविरुद्धदोषोऽपि सन्निवेशितः। अत्र चतुर्वर्गशास्त्रविरुद्धा अपि दोषत्वेन समावेशिताः। उक्तञ्च-**कला चतुर्वर्गशास्त्रविरुद्धानि विद्याविरुद्धानि।**[४] एवमुपर्युक्ता सप्त वाक्यार्थदोषा परम्पराप्राप्ता एव। अप्रयुक्तदोषस्योल्लेखो यद्यपि भामहेन कृतस्तथाप्ययं वामनस्य स्वोपज्ञः। असौ मायादिभिः कल्पितार्थमप्रयुक्तत्वेन कल्पते। उक्तञ्च- **मायादिकल्पितार्थमप्रयुक्तम्।**[५] उदाहरणविषये चात्र स्तोकमुदाहरणमित्युक्त्वा तूष्णीं भवति वामनः।

(६) **गुणविपर्ययात्मकेषु दोषेषु** अनेनापि गुणविपर्ययत्वेन केचन दोषाः वर्णिताः। परं सर्वत्र नानुकृतो दण्डी। दण्डी शिथिलत्वं श्लेषगुणस्य विपर्ययत्वेनाङ्गीकरोति, वामनस्तु ओजोविपर्ययत्वेन। तथा चोक्तं- **शिथिलत्वं प्रसादः, अयमोजो विपर्ययात्मा दोषः।**[६] शैथिल्यमोजो मिश्रितः सन् गुण एव, दोषस्तु शुद्धं शैथिल्यम्। उक्तञ्च- **गुणः सम्प्लवात्, शुद्धस्तु दोष एव।**[७] मसृणत्वं श्लेषगुणः, तदभावोऽमसृणत्वं दोषः। वैषम्यं समतायाः विपर्ययम्। दण्डी अपि समतायाः विपर्ययं वैषम्येन स्वीकरोति। समाधेर्विपर्ययसम्बन्धे वामनोऽपि दण्डी इव मौनमालम्बते। समासबाहुल्यं दोषः, सो हि माधुर्यस्य विपर्ययः। माधुर्यञ्च वर्णानां पृथक् पदत्वम्। उक्तञ्च- **पृथक् पदत्वं माधुर्यम्।**[८] जठरत्वं दोषः, स खलु सौकुमार्यस्य विपर्ययः। उक्तञ्च-**अजठरत्वं सौकुमार्यम्। अविकटत्वं दोषः**, यो हि उदारतागुणस्य विपर्ययः। उदारता च वर्णे विकटता। तथा ह्युक्तम्- **विकटत्वमुदारता।** विकटत्वं खलु लीलायमानत्वस्य पर्यायत्वेन वामनोऽङ्गीकरोति, ब्रूते च- **'यस्मिन् सति नृत्यन्तीव पदानि जनस्य वर्णभावनां स्पृशन्ति भवति तद्विकटत्वम्'**[९] एतेन सुस्पष्टं किल लीलायमानत्वस्य पर्यायतया विकटत्वमित्यस्य प्रयोगः। अर्थप्रत्ययविलम्बित्वं हि अर्थव्यक्तेर्गुणस्य विपर्ययः। अर्थव्यक्तिश्चार्थव्यक्तेर्हेतुः। उक्तञ्च- **'अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः।'**[१०] पुराणच्छांया च कान्तेर्विपर्ययः। कान्तिश्च वामनमतेन वर्णानामौज्ज्वल्यम्। तथा हि- औज्ज्वल्यं कान्तिः। यदभावे पुराणच्छायेत्युच्यते। ग्राम्यत्वमुदारतायाः विपर्ययरूपम्। उदारता चाग्राम्यत्वम्। उक्तं हि-**अग्राम्यत्वमुदारता।** वस्तुतः वामनोक्तानामर्थगुणानां बन्धगुणानाञ्च नामानि समानानि, परं लक्षणं पृथक्त्वेन कृतम्। अत्र दोषविवेचने वामनोऽर्थगुणानामेव विपर्ययत्वं सङ्केतयति, यद्धि उदारतावर्जं बन्धगुणानां विपर्ययत्वेनापि तुलामधिरोहति। यतो हि वामनमतेन अग्राम्यत्वमुदारता, ग्राम्यत्वञ्च तद्विपर्ययरूपम्। एवं वामनाचार्यो गुणविपर्ययात्मकान् नव दोषान्

१-१०. काव्यालङ्कारसूत्रवृत्तिः (वामनः) क्रमशः- २/१ पृ.-७३, पृ.-७४, २/१/११, २/१/१२, २/१/१३, पृ. २७७, २/१/१५, २/११३, २/१/२१, २/२/१, २/२/६, २/२/७, २/२/८, २/२/९, २/२/१०, २/२/११, १/५/२, २/२/१०, २/२/२२, २/२/९, २/२/२, २/२/२४, २/२/२१, पृ.-२१, ३/१/२१, ३/१/२३, ३/१/२४, पृ. २०१-२०९

प्रत्यक्षतः परोक्षतो वा वर्णितवान्। येषु शैथिल्यवैषम्यजरठत्वाख्यास्त्रयः श्रुतिकटुत्वरूपा एव। अर्थप्रत्ययविलम्बित्वग्राम्यत्वे च प्राचीने। शेषाः अमसृणत्व-समासबाहुल्य-अविकटत्व-पुराणच्छायाश्च नूत्नाः वामनस्य स्वोपज्ञाश्चेत्यवधारयामः। एवं गुणविपर्ययस्वरूपाणां सूक्ष्मदोषाणां क्षेत्रेऽप्ययं महतीं भूमिकामावहति आचार्यो वामनः।

(७) उपमादोषप्रसङ्गे मेधाविनोक्तान् भामहेनोद्धृतान् सप्त उपमादोषानयं वामनो यथायथं नाङ्गीकरोति। अयं हि विपर्ययाख्यं दोषं न्यूनाधिकदोषयोरेवान्तर्भाव्य षडेवैत इति निर्धारयति। तथा हि-

**'अनयोर्दोषयोर्विपर्ययाख्यान्तर्भावान्न पृथगुपादानम्।**
**अत एवास्माकं मते षड्भेदा इति।'[१]**

हीनाधिकयोराधारः किमित्याद्याचार्यैरनुक्तमपि जातिप्रमाणधर्मन्यूनतोपमानस्य हीनत्वम्[२] इत्ययं सूचयतीत्यपरं वैशिष्ट्यमस्याचार्यस्य। एतेनेदमायातं यद्वामनकाले दोषदर्शनं विकासोन्मुखमासीत्। वर्गीकरणस्य वैज्ञानिकीं पद्धतिमाश्रित्य दोषनिरूपणस्य प्रयासे नूतनाः नूतनाः परिकल्पनाः समजायन्त। परमसौ प्रयासः वामनसाहित्येऽपि किञ्चिद्वामनीभूत इवैव। दोषलक्षणानि केषुचित् स्थलेषु अन्योन्यं सङ्क्रमितानीव लक्ष्यन्ते। यथा- नेयार्थत्वं लक्षणाया उलङ्घनाद्भवति। क्लिष्टत्वं पुन उभयोः सहकृतकुटिलीकृतशब्द-प्रयोगेणेति। परं वामनः उभयोरुदाहरणं प्रायेण समानमेवोपस्थापयति।

रुद्रटो महत्त्वपूर्णं स्थानं बिभर्त्यलङ्कारसाहित्ये। पूर्वाचार्यवर्गीकरणप्रक्रियाऽऽचरताप्यनेन प्रथमं दोषान् शब्दार्थगतत्वेन प्रविभज्य भूयोऽपि शब्दं पद-वाक्यगतत्वेन वर्गीकृत्य दोषोपस्थापनमभिनवेन प्रकारेण कृतम्। रुद्रटप्रतिपादिता दोषाः द्विधा- शब्दगता अर्थगताश्च। शब्दगता अपि पदवाक्यगतत्वेन द्विधा। तत्र असमर्थ-अप्रतीत-विसन्धि-विपरीतकल्पना-ग्राम्य-देश्याख्याः षट् पदमात्रगताः। संकीर्ण-गर्भित-गतार्थनामानस्त्रयो वाक्यगताः। अपहेतु-अप्रतीत-निरागम-बाधवत्-असम्बद्ध-ग्राम्य-विरस-तद्वान्-अतिमात्राख्याः नवार्थगताः। न्यूनपद-अधिकपद-अवाचक-अक्रम-अपुष्टार्थ-अशब्द-अचारुपदाभिधानाः गुणविपर्ययरूपाः सप्त। शब्दभेद-वैषम्य-असम्भव-अप्रसिद्धाख्याश्चत्वार उपमादोषाः। सर्वमाहत्योनत्रिंशद्दोषाः वर्णिता ह्याचार्येण। तेषां दिङ्मात्रमुपदिश्यते-

**१. शब्ददोषाः-** तत्र प्रथमं (क) पदगताः- असमर्थत्वम् तिरोहितसामर्थ्यम्। अर्थात् स्ववाच्यार्थप्रतिपादने विगलितसामर्थ्यं पदमसमर्थम्। उक्तञ्च-

**पदमिदमसमर्थं स्याद्वाचकमर्थस्य तस्य।**
**न च वक्तुं तं शक्नोति तिरोहितसामर्थ्यं निमित्तेन।।[३]**

---

१-३. काव्यालङ्कारसूत्रवृत्तिः (रुद्रटः) - ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१, ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.-१४६ (नमिसाधुकृतटीका) १४/१२-१३

नाम्नायं नवीनोऽपि पूर्वाचार्यविहितलक्षणानुसारित्वात् प्राचीनः। रुद्रटेनास्य चत्वारो भेदाः विहिताः– (१) सोपसृष्टत्वादसामर्थ्यम्, (२) शास्त्रे अर्थविशेषे परिपठितोऽपि प्रक्रियायां तदर्थसम्पादनेऽसामर्थ्यम् (३) योगरूढेऽपि यौगिकार्थे प्रयोगादसामर्थ्यम् (४) अर्थस्य प्रकरणापेक्षित्वादसामर्थ्यम्। तत्र प्रथमं, प्राद्युपसर्गेण युक्ता धातवः स्वं मूलमर्थ जहति इति सिद्धान्तः। परं त एवोपसृष्टाः धातवः स्वमूलार्थप्रयोगेऽसमर्था स्युस्तदा असमर्थत्वम्। यथा प्रहरतीदं पदं गमनार्थेऽप्रसिद्धम्। द्वितीयं, धातुपाठे परिपठितोऽपि प्रयोगावस्थायां तदर्थप्रतिपादने असमर्थम्– यथा हन्धातुर्हिंसागत्योः परिपठितोऽपि गमनेऽर्थेऽसमर्थः। तृतीयं – योगरूढात्मकस्य शब्दस्य यौगिकार्थे प्रयोगः चतुर्थं, यत्रार्थः प्रकरणसापेक्षः स्यात्। यथा, वारिधेरर्थे जलभृत्-शब्दप्रयोगः। उक्तञ्च–

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।
प्रहाराहारसंहारविहारपरिहारवत्।।

धातुविशेषोऽर्थान्तमुपसर्गविशेषयोगतोऽगतवान्।
असमर्थः स स्वार्थे भवति यथा प्रस्थितः स्थास्नौ।।

इदमपरमसामर्थ्यं धोतार्यत् पठ्यते तदर्थोऽसौ।
न च शक्नोति तमर्थं वक्तुं गमनं यथा हन्ति।।

शब्दप्रवृत्तिहेतौ सत्यप्यसमर्थमेव रूढिबलात्।
यौगिकमर्थविशेषं पदं यथा वारिधौ जलभृत्।।

निश्चीयते न यस्मिन् वस्तु विशिष्टं पदे समासेन।
असमर्थं तच्च यथा मेघच्छविभासरोहाश्वम्।।[१]

किन्तु रुद्रटपरिकल्पिताः असमर्थस्य चत्वारो हि प्रकाराः पूर्वाचार्योद्भाविताः। यथाऽसमर्थस्य प्रथमः प्रकारो वामनस्यान्यार्थेनाभिन्नः। द्वितीयो भामहस्याप्रयुक्तेन, वामनस्य गूढार्थेन च दोषभेदेन तुलामधिरोहति। तृतीयस्यासमर्थस्य रुढिच्युतः वामनोक्तेऽन्यार्थे सङ्केतो लभ्यते। चतुर्थोऽपि प्रकारो नाट्यशास्त्रीयार्थहीनलक्षणे गतार्थो भवति। अभिनवगुप्तेनाप्यस्य व्याख्या तथैवाचरिता। अप्रतीतमपि प्राचीनैरुक्तम्। किन्तु वामनोक्तेनाप्रतीतेनास्याप्रतीतस्य योगो नास्ति। रुद्रटोऽरूढकल्पितार्थप्रयोगे चाप्रतीतस्य सत्तां स्वीकुर्वन् संशयवदसंशयवद्भेदाभ्यामस्य द्वैविध्यं मनुते। उक्तञ्च–

युक्त्या वक्ति तमर्थं न च रूढं यत्र यदभिधानतया।
द्वेधा तदप्रतीतं संशयवदसंशयं च पदम्।।[२]

१-२. काव्यालङ्कारसूत्रवृत्तिः (रुद्रटः) - ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१; ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.-१४६ (नमिसाधुकृतटीका) १४/१२-१३

यत्र प्रयुक्तः शब्दो विशिष्टवस्तुनो रूढार्थवाचको न स्यात्। अथापि गुणक्रियायुक्तिभिः रूढार्थवाचकस्यार्थस्य बोधकः स्यात्। यथा हिमहेति पदस्य न हि कश्चन रूढार्थः। सूर्याग्न्योरन्यतरं कमप्यर्थं संकेतयितुमसौ समर्थः। अतस्तत्पदं ससंशयवदप्रतीतम्। उक्तञ्च–

**साधारणमपरेष्वपि गुणादिकृत्वा निमित्तमेकस्मिन्।**
**यत् कृतमभिधानतयार्थे संशयवद्यथा हिमहा।।**[१]

अवाचकदोषस्योदाहरणं भामहेनापि प्रायेणैवमेव प्रस्तुतम्– हिमापहामित्रधरैरित्यादि। किन्तु तत्र व्योमशब्दप्रयोगेण हिमापहामित्रधरैरित्यस्यार्थो न सन्दिग्धः। वस्तुतः रुद्रटोक्तोऽयं संशयवदप्रतीतो दोषः भामहोक्तयोरवाचकसंशयदोषयोर्मिश्रीभूत इति वक्तुं युज्यते। अत्रैव पुनः असमर्थस्य यश्चतुर्थः प्रकारस्तत्र संशयो विशेषणपदे भवति। अत्र तु संज्ञापदे एवेत्यनयोर्भेदः। असंशयवदप्रतीतश्च यौगिकार्थप्रयोजके शब्दे भवति, किन्तु रूढ्यर्थे प्रयुक्ताः संज्ञाशब्दाः पर्यायेण कल्पितार्थाभिधाने च प्रयुक्ताः स्युः। उक्तञ्च–

**पदमपरमप्रतीतं यौगिकरूढशब्दपर्यायः।**
**कल्पितमर्थे तस्मिन् यथाश्वयोषिन्मुखार्चिष्मान्।।**[२]

नाट्यशास्त्रीयाभिनवभारत्यां गूढार्थदोषस्य व्याख्ययाऽस्येषत् साम्यमस्ति। निष्कर्षतो वक्तुं शक्यं यदयमप्रतीतो दोषः पूर्वग्रन्थेष्वपि नामान्तरेणोल्लिखितः संकेतितश्च। किञ्चायमेवाप्रतीतो भामहवामनाभ्यां लक्षणान्तरेणोक्तः। अतोऽयं पूर्व-परम्पराप्राप्तः। रुद्रटेनात्र केवलं नवीनसम्बन्धस्थापनं कृतमित्येवास्य वैशिष्ट्यम्। विसन्धिः सन्धियोग्यस्थले तदकरणं विरुद्धस्थले च तत् करणं विसन्धिः। उक्तञ्च–

**यस्यादिपदेन समं सन्धिर्नभवेद्विरुद्धो वा।**
**तदिति विसन्धि स इत्थं मन्थरया भरत आहूतः।।**[३]

वामनोक्तेन विसन्धिदोषेणास्यांशतः साम्यम्। वामनोऽस्य त्रीन् भेदान् स्वीकरोति, रुद्रटश्च द्वावेव। रुद्रटस्य सन्धियोग्ये स्थले तदकरणमिति प्रथमं भेदं वामन उल्लिलेख। वामनस्य सन्धिवैरूप्यं, कष्टसन्धिञ्चास्वीकृत्य तत् स्थानेऽयं विरुद्धसन्धिदोषं स्वीचकार। वैशिष्ट्यमिदं यद् भामहोक्तो विसन्धिदोषो वामनेनोपेक्षित आसीद् यमग्रे रुद्रटोङ्गीकृतवान्।

---

१-३. काव्यालङ्कारसूत्रवृत्तिः (रुद्रटः) – ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१, ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.-१४६ (नमिसाधुकृतटीका) १४/१२-१३

विपरीतकल्पनायाञ्च समासादिवशादेकस्यैव पदस्य प्रकरणविरुद्धा बहवोऽर्थाः सम्भाव्यन्ते। तथा चोक्तं रुद्रटेन–

**पूर्वार्थपरिपन्थी यस्यार्थः स्पष्ट एव सम्भवति।**
**विपरीतकल्पनं तद्भवति पदमकार्यमित्रमिव।।**[1]

अयं विपरीतकल्पनं नाम संशयः सन्धिवशादपि सम्भवति, यथा स महात्मा भाग्यवशान्महापदमुपागतः। परमयं रुद्रटस्य विपरीतकल्पनं नाम दोषो नामतो नवीनोऽपि अर्थतः प्राचीन एव। अस्यैव दोषस्याभिप्रायो भामहेन व्यर्थत्वदोषेण, वामनेन च सन्दिग्धत्वदोषेणोद्भावितः। अतोऽनयोः पूर्वोक्तदोषयोर्मिश्रणप्राय एवायं दोषः।

ग्राम्यत्वमित्यस्य दोषस्य विवृतौ रुद्रटेन काचिन्नूतनतैवाङ्गीकृता। अयमनुचितपदप्रयोगे ग्राम्यत्वदोषं स्वीकरोति। उक्तञ्च– **यदनुचितं यत्र पदं तत्रैवोपजायते ग्राम्यम्।**[2] अनौचित्यस्य मूलं कारणमपि रुद्रटेन चतुर्धा विभज्योल्लिखितम्–(१) क्वचिद्वक्तृविषयकतया (२) क्वचिद्वस्तुविषयकतया (३) क्वचित् सभ्यासभ्यार्थवाचकस्य सभ्यार्थे प्रयोगतया (४) क्वचिच्च पूर्वकविप्रयुक्तेन विशिष्टवस्तुना सम्बद्धस्य व्यञ्जकशब्दस्य तद्भिन्नवस्तुभिः सह प्रयोगेण। तत्र प्रथमो वक्तृविषयको दोषः, यत्र उत्तम–मध्यमाधमप्रकृतिषु विभक्तानि पात्राणि स्वभावप्रतिकूलानि सम्बोधनादिपदानि प्रयुञ्जते। यथा–अधमपात्रेण स्वयोग्येऽपि पात्रे 'तत्र भवान्' इति पदस्य प्रयोगः। द्वितीयो वस्तुविषयको ग्राम्यत्वदोषः, यत्र वक्त्रा सम्बोध्यविषयस्य प्रकृतेः प्रतिकूलतया सम्बोध्यते। यथा राज्ञः कृते– तत्र भवानिति पदस्य प्रयोगः। तृतीयो ग्राम्यत्वदोषः गण्ड–पेलवादिशब्दानां प्रयोगस्थले भवति। गण्डशब्दः कपोलावयवविशेषे सभ्यार्थवाचकोऽपि देशकालपरिस्थितिवशात्क्वचिदसभ्यार्थस्यापि वाचको व्यञ्जको वा भवति। चतुर्थो ग्राम्यत्वदोषः प्रसङ्गान्तरे प्रयोक्तव्यानां पदानामयथात्वे प्रयोक्तव्ये भवति। रणति, भणति–वाति–कणतिप्रभृतीनां क्रियापदानां प्रयोगः क्रमेण नूपुर–पुरुष–वायु–पीडितप्रसङ्गे समुचितोऽयथात्वे सति दोषः। यथा पुरुषाय 'वाति' पदप्रयोगः। एषु तृतीय एव ग्राम्यत्वदोष पूर्ववर्तिभिराचार्यैः ग्राम्यत्वस्य कारणत्वेन प्रयुक्तः। शेषास्त्रयस्तु लोकविरुद्धदोषस्य कारणत्वेनाङ्गीकृताः। रुद्रटाचार्यः ग्राम्यत्वदोषस्येमाननौचित्यमूलकान् चतुरः प्रकारान् प्रदर्श्य ग्राम्यत्वस्य व्यापकतामवलोकयत्। ग्राम्यत्वदोषेऽस्मिन् पूर्वोक्तानामनेकानां दोषाणामन्तर्भावो भाव्यते। देश्यत्वं रुद्रटस्य स्वोपज्ञो दोषः। देशविशेषे प्रयुक्तानां प्रकृति–प्रत्ययवर्जितानां रूढिशब्दानां देशान्तरे प्रयोगेणायं दोषः, स च देश्यत्वाभिधानेन स्वीकृतः। यथा– मडहादयश्शब्दाः। उक्तञ्च–

---

१–२. काव्यालङ्कारसूत्रवृत्तिः (रुद्रटः) - ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१, ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.–१४६ (नमिसाधुकृतटीका) १४/१२–१३

**प्रकृतिप्रत्ययमूला व्युत्पत्तिर्नास्ति यस्य देश्यस्य।**
**तन्मडहादि कथञ्चन रुढिरिति न संस्कृते रचयेत्।।**[१]

**( ख ) वाक्यगता–** रुद्रटाचार्यः सङ्कीर्ण-गर्भित-गतार्थभेदैर्वाक्यगतान् दोषान् त्रिधा स्वीकरोति। उक्तञ्च– **वाक्यं भवति तु दुष्टं सङ्कीर्णं गर्भितं गतार्थञ्च।।**[२] असावनलङ्कारत्वं दोषत्वेन न स्वीकरोति तथाप्यलङ्कारविरहिते वाक्ये मध्यमकाव्यत्वं मनुते। उक्तञ्च– **यत्पुनरनलङ्कारं निर्दोषञ्चेति तन्मध्यम्।**[३] अनेनाङ्गीकृतास्त्रयो वाक्यदोषा प्रस्तूयन्ते

सङ्कीर्णत्वं वाक्यस्य पदानि वाक्यान्तरमनुसंविशन्ति तत्र भवति। तथा हि–

**वाक्येन यस्य साकं वाक्यस्य पदानि सन्ति मिश्राणि।**
**तत्सङ्कीर्णं गमयेदनर्थमर्थेन वा गमयेत्।।**[४]

गर्भितम् यत्र वाक्यं वाक्यान्तरं प्रविष्टं सत् कष्टकल्पनया वाक्यार्थबोधं कारयति तत्र भवति। उक्तञ्च–

**यस्य प्रविशेदन्तर्वाक्यं वाक्यस्य संगतार्थतया।**
**तद्गर्भितमितिगमयेन्निजमर्थं कष्टकल्पनया।।**[५]

वाक्यार्थो यत्रान्याभिधेयवाक्येन गम्यते तत्र गतार्थो भवति। दोषोऽयं प्रबन्धादिषु प्रथते। तथा हि–

**यस्यार्थः सामर्थ्यादन्यार्थैरेव गम्यते वाक्यैः।**
**तदितिप्रबन्धविषयं गतार्थमेतत्ततो विद्यात्।।**[६]

रुद्रटोक्ता एते त्रयोऽपि दोषाः नवीनाः।

**( २ ) अर्थदोषाः** अपहेतु-अप्रतीत-निरागम-बाधवत्-असम्बद्ध-ग्राम्य-विरस-तद्वत्-अतिमात्राख्याः। तथा चोक्तम्–

**अपहेतुरप्रतीतो निरागमो बाधयन्नसम्बद्धः।**
**ग्राम्यो विरसस्तद्वानतिमात्रश्चेति दुष्टोऽर्थः।।**

**अपहेतुरसौ यस्मिन् केनचिदंशेन हेतुतामर्थः।**
**याति तथात्वे मुक्त्या बलवत्सा बांध्यते परया।।**[७]

---

१-७. काव्यालङ्कारसूत्रवृत्तिः (रुद्रटः) – ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१, ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.-१४६ (नमिसाधुकृतटीका) १४/१२-१३

अयं दोषो भामहोक्तेन हेतुहानिदोषेण किञ्चिदुपैति समताम्। परं हेतुहानिरित्यस्यापहेतुना दोषेण सम्बन्धो दूरवर्ती। उभौ पूर्णतया समानाविति वक्तुं नैव पार्यते। हेतोरपकृष्टतया सम्बद्धोऽपि अपहेतुः काञ्चिद्विशिष्टां स्थितिं प्रकाशयति।

रुद्रटस्याप्रतीतत्वदोषो वामनोक्तेन गूढार्थदोषेण साम्यमेति इति तुलनात्मकदृष्ट्याऽध्ययनेन प्रतीयते। **अर्थोऽयमप्रतीतो यः सन्नपि न प्रयुज्यते वृद्धै** रिति रुद्रटोक्तमप्रतीतलक्षणम्। वामनोक्तं गूढार्थलक्षणञ्च अप्रसिद्धार्थप्रयुक्तं गूढार्थम्। प्रायेणोभयोरपि तात्पर्यमेकमेवेत्यप्रतीतगूढार्थयोरैक्यमस्ति। निरागमत्वम् शास्त्रप्रमाणपरिवर्जितम्। उक्तञ्च–

**आगममभ्यस्तमृते य उच्यतेऽर्थो निरागम इति सः।**[१] अस्य तुलना भामहस्यागमविरुद्धदोषेण सह कर्तुं शक्यते। भामहोक्तमागमविरुद्धलक्षणम्– **तद्विरोधितदाचारव्यतिक्रमणतो यथेति।**[२]

**आगमो धर्मशास्त्राणि लोकसीमा च तत्कृता।**
**तद्विरोधि तदाचारव्यतिक्रमणतो यथा।।**[३]

अत्रोभयोर्दोषयोस्तात्पर्यं प्रायेण एक एव प्रतीयते। रुद्रटोक्तं बाधवद्दोषलक्षणं (११/७) भामहोक्तस्य व्यर्थत्वदोषस्यानुकृतिमात्रमेव। द्रष्टव्यमत्रोभयोराचार्ययोर्लक्षणम्–

**विरुद्धार्थं गतं व्यर्थं विरुद्धं तूपदिश्यते।**
**पूर्वापरार्थव्याघाताद्विपर्ययकरं यथा।।**[४]

रुद्रटस्यासम्बन्धत्वदोषः प्रायेण वामनस्यैकार्थदोषेण साम्यं स्थापयति। अनयोरुभयोर्दोषयोरुदाहरणं प्रायेणैकरूपमेव। द्रष्टव्यन्तावद्रुद्रटोक्तमसम्बद्धार्थदोषलक्षणम्–

**प्रकान्तानुपयोगो प्राप्तो यस्तत् क्रमादसम्बद्धः।**
**स इति गतास्ते कीर्तिर्बहुफेनं जलधिमुल्लङ्घ्य।।**[५]

वामनस्य चैकार्थलक्षणमपि एवमेव विद्यते काव्यालङ्कारे। यद्यपि ग्राम्यत्वविरसदोषौ दण्डिना काव्यादर्शे गुणविपर्ययरूपेण गृहीतौ। तथापि दोषत्वेनैतयोरवस्थानं पूर्वत एव विद्यमानम्। परं रुद्रटाचार्यप्रोक्तं ग्राम्यत्वलक्षणं दण्डिनो लक्षणाद्भिन्नम्! अयं हि व्यवहाराकारवेशवचनानां देशकुलजातिविद्यावित्तवयस्थान–पात्रविषयाणमनौचित्येन च ग्राम्यत्वदोषमुररीकरोति। तथा हि–

**ग्राम्यमनौचित्यं व्यवहाराकारवेषवचनानाम्।**
**देशकुलजातिविद्यावित्तवयः स्थानपात्रेषु।।**[६]

---

१–६. काव्यालङ्कारसूत्रवृत्तिः (रुद्रटः) – ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१, ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.–१४६ (नमिसाधुकृतटीका) १४/१२–१३

विरसत्वं रसदोषो न तु गुणविपर्ययरूपम्। अप्रसङ्गेऽपि तत्तद्रसवर्णनत्वं विरसत्वम्। किञ्च, रसावसरेऽपि वर्णनीयरसस्यातिवृद्धौ विरसदोषो भवतीत्यनेन सूच्यते। उक्तञ्च काव्यालङ्कारे रुद्रटेन–

**अन्यस्य यः प्रसङ्गे रसस्य निपतेद्रसः क्रमापेतः।**
**विरसोऽसौ स च शक्यः सम्यज्ज्ञातुं प्रबन्धेभ्यः।।**[1]

विशेष्ये विशेषणं यत्राव्यभिचारित्वेन संगच्छते तत्र तद्वद्दोषो भवति। यथा– दावानलेन सहातितीव्रतायाः विशेषणत्वेनोपन्यासः। विशेषणानां छन्दोमात्रपूरणार्थतया प्रयोगोऽपि तद्वद् दोषः। उक्तञ्च ग्रन्थकर्त्रा–

**यो यस्याव्यभिचारी सगुणादिस्तद्वत् विशेषणं क्रियते।**
**परिपूरयितुं छन्दो यत्र स तद्वानिति विज्ञेयः।।**[2]

रुद्रटोक्तेनासम्बद्धदोषेणास्य साम्यं प्रतीयते। परं वैशिष्ट्यमिदमस्ति यदत्र छन्दोपूरणरूपं प्रयोजनमुक्तम्। वामनस्यानर्थदोषेणाप्यस्यांशतः साम्यं परिलक्ष्यते– पूरणार्थमनर्थकमित्यादि (२-१-९) वामनोक्तसूत्रानुसन्धानात्।

अतिमात्रत्वम्, काव्यालङ्कारे अत्युक्तिमेवातिमात्रशब्देन निर्दिष्टम्। तथा हि– अतिदूरमतिक्रान्तो मात्रां लोकेऽतिमात्रम्। दण्डिना कान्तिगुणस्य विपर्ययत्वेनात्युक्तिरित्यस्य चर्चा कृता। एवमर्थदोषा अपि पूर्वपरम्पराप्राप्ताः। यत्र दोषाणां नवाभिधानं तत्र लक्षणं प्राचीनं, यत्र वा लक्षणं नवीनं तत्राभिधानं प्राचीनमित्यंशतो योगदानमर्थदोषविषये ह्याचार्यरुद्रटस्येति वक्तुं योग्यम्।

**(३) गुणाभावस्वरूपाः दोषाः**– न्यूनपद-अधिकपद-अवाचक-अक्रम अपुष्टार्थ-अशब्द-अचारुपदाख्याः सप्त गुणाभावस्वरूपाः दोषा रुद्रटेनोल्लिखिताः। वाक्ये सौष्ठवसम्पादनाय येषामावश्यकता भवति। ते चामी दोषा सन्ति–

**अन्यूनाधिकवाचकसुक्रमपुष्टार्थशब्दचारुपदम्।**
**क्षोदक्षममक्षुण्णं सुमतिर्वाक्यं प्रयुञ्जीत।।**[3]

एतेषामभाव एव दोषरूपः। यत्र वाक्ये चैतेषां गुणानामभावस्तत्रोपर्युक्ताः रुद्रटस्वीकृताः दोषा अवधेयाः। येषु केचनातीव नवीनाः। अक्रमो भामहस्यापक्रमरूपेण, अशब्दः शब्दहीनरूपेण चोल्लिखितौ। अवाचक-अपुष्टार्थौ च एतन्नाम्नैव पूर्वाचार्यैरुल्लिखितौ। केवलम् अधिकपद-न्यूनपदत्वे च रुद्रटस्य स्वोपज्ञे, एतयोरन्यत्र क्वाप्युल्लेखो नास्ति।

---

१-३. काव्यालङ्कारसूत्रवृत्तिः (रुद्रटः) - ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१, ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.-१४६ (नमिसाधुकृतटीका) १४/१२-१३

(४) **उपमालङ्कारसम्बन्धिनो दोषा:** मेधाविना सप्त संख्याका: परिकीर्तिता:, भामहेन ते सर्वेऽप्युद्धृता:। केचिदालोचिता अपि। दण्डिनापि पूर्वोक्तेषु सप्त उपमादोषेषु विपर्यय–असम्भव–असादृश्य व्यक्तिरिक्ता: हीनता–लिङ्गभेद–वचोभेद–उपमानाधिक्याश्चत्वारो दोषाङ्गीकृता:। तथैव रुद्रटोऽपि चतुर: उपमादोषान् स्वीकरोति, परन्ते दण्डिस्वीकृता एव न सन्ति। रुद्रटोक्ता उपमादोषाश्चत्वार: सन्ति– सामान्यशब्दभेद–वैषम्य–असम्भव–अप्रसिद्धाख्या:। तथाहि–

**सामान्यशब्दभेदो वैषम्यमसम्भवोऽप्रसिद्धश्च।**
**इत्येते चत्वारो दोषा नासम्यगुपमाया:।।**[१]

सामान्यशब्दभेददोष: विवेच्यते यत्रोपमानोपमेययो: सामान्यवाचकं पदं भग्नं न भवति तावदुपमानवाचकं न भवति। तत् सामान्यवाचकपदं लिङ्गकारककालविभक्तिवचनानामन्यथाभावेनोपमायां भग्नं भवति। उक्तञ्च–

**सामान्यशब्दभेद: सोऽयं यत्रापरत्र शक्येत।**
**योजयितुं नाभग्नं तत् सामान्याभिधायिपदम्।।**[२]

**तल्लिङ्गकालकारकविभक्तिवचनान्यभावसद्भात्।**
**उभयो: समानयोरिति तस्यां भिद्येत किञ्चित्तु।।**[३]

अत्रायमभिप्राय:, यत्रोपमानोपमेययर्योर्लिङ्गकालकारकविभक्तिवचनानि असामान्यानि भवन्ति तत्र सामान्यवाचकपदस्य भञ्जनमन्तरा उभयोरन्वयो न भवति। यथा– चन्द्रकलेव सुगौरो इत्यत्र चन्द्रकलेत्युपमानं स्त्रीलिङ्गम्। उपमेयञ्च पुल्लिङ्गं तथा चानुक्तम्। समानो धर्म: पुल्लिङ्ग:, अत: खण्डीकरणमावश्यकम्। अर्थाद् यथा चन्द्रकला सुगौरी तथायं सुगौर इत्यर्थो लभ्यते। उपमानोपमेययोर्यत्रैकं निर्विशेषणमपरं सविशेषणं स्यात्तथैव अकृतविशेषणकृतविशेषणयो: साम्यं भवेत्तत्र **वैषम्यदोषो** भवति। तथा चोक्तम्– **अकृतविशेषणमेकं यत्स्यादुभयोस्तदन्यवैषम्यम्।** रुद्रटानुसारेणायं दोष: कल्पिताया–मुत्पाद्यायामित्यनयोरुपमयोर्भवति। तथा चोक्तम् **सम्भवति कल्पितायामुत्पाद्यायाञ्च नान्यत्र।**[४] असम्भवदोष: पूर्वाचार्योक्तादसम्भवदोषाद्भिन्न:। रुद्रटेनोपमासम्भवदोष एवं वर्णित:–

**उपमानं यत्र स्यादसम्भवत्तद्विशेषणं नियमात्।**
**सम्भूतमयद्यर्थं विज्ञेयोऽसम्भव: स इति।।**[५]

अप्रसिद्धत्वदोष: पूर्वाचार्योक्तविपर्यदोषसदृश:। वैशिष्ट्यं त्विदं यदत्राप्रसिद्धत्वामावश्यकम्। हीनत्वोत्कृष्टत्वाभ्यां कल्पितो विपर्यय: अप्रसिद्धावस्थायामेव दोष:, अन्यथा निन्दास्तुत्यो: विहित:

१–५. काव्यालङ्कारसूत्रवृत्ति: (रुद्रट:) – ६/३, ६/४, ६/५, ६/६, ६/७, ६/११, ६/१२, ६/१३, ६/१४, ६/१६, ६/१७, ६/१९, ६/२०, ६/२२, ६/४१, ११/८, १३०, ११/०९, ११/१२, ११/१५, २/८, पृ. १४६, ११/२५, ११/२६, ११/२९, ११/३२, पृ.–१४६ (नमिसाधुकृतटीका) १४/१२–१३

विपर्ययोऽपि दोषकोटौ सन्निहितः स्यादिति रुद्रटमतम्। अतएव नमिसाधुः अप्रसिद्धदोषं स्वीकृत्य तत्र विपर्ययस्यान्तर्भावं वाञ्छति। उक्तञ्च तट्टीकायाम्– तथा योऽपि हीनताधिक्यविशिष्टो विपर्यय इत्युक्तः सोऽपि न तावन्मात्रेण दोषहेतुः, अतिप्रसङ्गात्। अपि त्वप्रसिद्धित एव। अन्यथा हि निन्दास्तुती यत्र चिकिर्षिते भवतस्तत्रापि यथाक्रमं निकृष्टस्योत्कृष्टस्य चोपमानस्य दुष्टत्वं स्यात्। एवं रुद्रटोक्तेषूपमादोषेषु त्रयो दोषा स्वोपज्ञाः, येषु पूर्वाचार्य– प्रोक्तासम्भवासादृश्यवर्जं पञ्चानामपि दोषाणामन्तर्भावो टीकाकर्त्रा नमिसाधुना दर्शितः। असम्भवदोषस्तु स्वयमेव रुद्रटेन शब्दतः प्रोक्तः। असादृश्यदोषो रुद्रटेन न चर्चितः, यतो हि सादृश्यमेवोपमायाः जीवातुः। तद्विनोपमालङ्कारपरिकल्पनमेवासम्भवम्। सत्यामेवोपमायां गुणदोषयोरौचित्यात्। उक्तञ्च स्वटीकायामाचार्यनमिसाधुना– **को हि ज्ञातोपमालक्षणः सादृश्याभावे उपमां कुर्वीत।**[१]

रसविषये रुद्रटः किमपि विशिष्टं वक्ति। एतन्मतानुसारेण परकीयायाः रतेरुपदेशो वर्ज्यो भवति। परन्तु यदा कविस्तदेषणोपदेशाभ्यां रहितः सन् काव्यमञ्चे केवलं तां वर्णनीयत्वेनोपस्थापयितुमिच्छति चेन्नोक्तदोषः। उक्तञ्च–

**न हि कविना परदारा एष्टव्या नापि चोपदेश्याः।**
**कर्तव्यतयाऽन्येषां न च तदुपायोऽभिधातव्यः।।**

**किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति।**
**आराधयितुं विदुषस्तेन न दोषः कवेरत्र।।**[२]

एवं रुद्रटप्रतिपादितेन दोषविवेचनेन विज्ञायते, यदेभिः प्रतिपादितेषु दोषेषु केचन लक्षणात्मकधिया प्राचीना अपि नाम्ना नवीनाः सन्तिः। प्राचीनेष्वपि यत्र तत्र नवाः सम्बंन्धाः संस्थापिताः ह्याचार्येण। मन्ये, रुद्रटकाले दोषसम्बन्धिनी प्रचलन्ती परम्परालङ्कारिकक्षेत्रे भावकसमुदाये च विचारपरिवर्तन–मूलाऽऽसीत्। प्रमाणञ्चात्र पूर्वालङ्कारिकेषु स्वीकृता ये दोषास्ते रुद्रटकाले न हि पूर्णतः स्थितिमवाप्ताः। यथा हि विद्याविरुद्ध–प्रतिज्ञाहानि–दृष्टान्त हानिप्रभृतयो दोषाः। रुद्रटाचार्यः रसौचित्ययोः सम्बन्धं दोषेण सह सन्धाय महत्त्वपूर्णां भूमिकामाविरकरोत्। एतन्मतेन ग्राम्यत्वदोषस्य बीजभूतमनेकविधमनौचित्यमेवास्ति। रससम्बन्धी विरसनामको दोषोऽप्यनेन चर्चितः। वस्तुतो ह्ययमाचार्यः काव्यशास्त्रे तस्य कालस्य प्रतिनिध्यमावहति, यत्रैकतोऽलङ्काररीत्यादीनामतिशयेन महत्त्वमासीदपरतश्च शनैः शनैः रससम्प्रदायः उन्नतशिरस्क आसीदित्यस्य वाङ्मयस्याध्ययनेन प्रतीयते।।

---

१-२. जयन्ती (षष्ठं पुष्पम्) रा.सं. संस्थापनम्, जयपुरम्, पृ.-९२

# वाक्यपदीयपदकाण्डस्थकालपदार्थस्य महाभाष्यदृष्ट्या पर्यालोचनम्

डॉ॰ प्रमोदकुमारशर्मा

अस्मिन् शोधनिबन्धे कालपदार्थमादाय विचारः क्रियते।

**(क) तत्र प्रथमं न्यायवैशेषिकदर्शनदिशा कालस्वरूपम्–**

आचार्यभर्तृहरिणा कालसमुद्देशे सर्वस्मादादौ न्यायदर्शनदिशा कालस्वरूपं प्रतिपादितम् अस्ति। नैयायिकवैशेषिकौ कालस्य बाह्यसत्तां स्वीकुरुतः। तयोः मते कालः द्रव्यमस्ति। कालस्य सत्ता अनुमानेन सिद्ध्यति। परापरचिरक्षिप्रादिलिङ्गैः कालसत्ताऽनुमीयते।[१]

परापराचिरक्षिप्रादीनां भानम् आदित्यस्य परिस्पन्देन ज्ञायते। आदित्यपरिस्पन्द एव काल इति तु नैव वक्तुं शक्यते, यतो हि युगपदादिज्ञानेनापि कालोऽनुमेयो भवति। आदित्यपरिवर्तनमात्रेण एव युगपदादिज्ञानं सर्वान् न सम्भवति। वैशेषिकमतेन कालः सर्वकार्यहेतुः, नित्यः, एकः, विभुश्चास्ति।

नैयायिकेषु रघुनाथशिरोमणिः कालस्य पृथक् सत्तां नैव स्वीकरोति। तस्य मतेन कालः ईश्वरातिरिक्तो नास्ति, दिक्कालयोः अन्तर्भावः ईश्वरे एव सम्भवति[२] इत्यस्ति नैयायिकवैशेषिकयोः सिद्धान्तः। अस्य न्यायवैशेषिकसिद्धान्तस्य निरूपणम् आचार्यभर्तृहरिः वाक्यपदीयपदकाण्डे कालसमुद्देशे इत्थं चकार–

> **व्यापारव्यतिरेकेण कालमेके प्रचक्षते।**
> **नित्यमेकं विभुद्रव्यं परिमाणं क्रियावताम्।।[३] इति।**

---

१. अपरस्मिन्नपरं युगपत् चिरं क्षिप्रमिति काललिङ्गानि'इति वै. (२-२-६)

२. कालः परापरव्यतिकरयौगपद्यचिरक्षिप्रप्रत्ययलिङ्गम्। तेषां विषयेषु पूर्वप्रत्ययविलक्षणानामुत्पत्तौ अन्यनिमित्ताभावात् यदत्र निमित्तं सः कालः इति प्रशस्तपादभाष्यम्, पृ. ३३२,

३. वाक्यपदीयकाण्डे कालसमुद्देशे कारिका–११ इति।

अस्या: कारिकाया: प्रकाशाख्यव्याख्यायामेवमाह हेलाराज: यत् काणादा: कालं क्रियाव्यतिरिक्तं प्रचक्षते। तथा देवदत्त: मत्त: पर, अहं च देवदत्ताद् अपर: इत्यादिप्रत्ययरूपै: हेतुभि: अनुमीयमान: स: काल: व्यापक:, एक:, अकृतकत्वात् नित्य:, एवं क्रियाव्यतिरिक्तो जन्मादिक्रियापरिच्छेदद्वारा जन्यभावपरिच्छेदक: अस्ति।[१]

परत्वापरत्वमहत्वादिगुणाश्रयत्वात् स: काल: द्रव्यमपि अस्ति इति भर्तृहरि: पुनरुवाच– **"द्रव्यात्मा स तु संसर्गादेवं रूपः प्रकाशते"**[२] इति। रघुनाथशिरोमणे: मतस्योल्लेखनं कुर्वता आचार्येण भर्तृहरिणा ततोऽपि पूर्वमेवमुक्तम्–

**चैतन्यवत्स्थिता: लोके दिक्कालपरिकल्पना।**
**प्रकृतिं प्राणिनां तां हि कोऽन्यथा स्थापयिष्यति।।**[३] इति।

अर्थात् यथाहि चैतन्यपुरुषस्य स्वभावभूतं लोके रूढम्, एवं पूर्वापरादित्यविषयकाणां सर्वेषां व्यवहाराणां कारणत्वेन दिक्कालावपि लोके रूढौ, ताभ्यां विना अर्थक्रियाया: अनिष्पत्त्या प्राणित्वभावना विघटेत। निर्जीवत्वमेव सर्वे भावा आपद्येरन्निति कारिकायां प्राणिपदग्रहणेन सूचयति भर्तृहरिरिति हेलाराज: प्रकाशव्याख्यायामाह[४]। अत्र ईश्वरस्य दिग्रूपतामभिधाय साधनसमुदेशे तस्यैव कालरूपतां प्रतिपादयन् एवमाह भर्तृहरि:–

**कालविच्छेदरूपेण तदेवैकमवस्थितम्।**
**स ह्यपूर्वापरोऽभाग: पररूपेण लक्ष्यते।।**[५] इति।

अर्थाद् ईश्वर एव कालविभागरूपेण क्षणकाष्ठकालादिनाऽवस्थित:, यत: स: ईश्वरात्मक: काल: वस्तुत: पौर्वापर्यरहित: अवयवरहित: अपि कालोपाधिक्रियागतपौर्वापर्येण तदुपाधिक्रियासमूहगतभागवत्तया च पौर्वापर्यवानिव भगवानिव च लक्ष्यते। हेलाराजोऽपि एवमेव निजगाद[६] इति दिक्।

---

१. "परापरादिप्रत्ययलिङ्गो व्यापक एकोऽमूर्तोऽत एवाकृतत्वान्नित्य: काल: क्रियाव्यतिरिक्तो जन्मादिक्रियाद्वारेण भावपरिच्छेदको वैशेषिकैराम्नात:" इति
वा. प. पदकाण्डे कालसमु. १ श्लोके व्याख्यायां हेलाराज:।
२. वा. प. प. का. कालसमु. श्लोक ७।
३. वाक्य प. प. का. दिक्समु. १८।
४. "यथा हि चैतन्यं स्वभावभूतम् एवं सर्वव्यवहाराणां पूर्वापरादित्वेन दिक्कालावपि रूढौ तावन्तरेणार्थक्रियाया: अनिष्पत्ते: प्राणित्वमेव विघटेत इति प्राणिग्रहणेन सूचयति। व्यवहारे च यथा प्रतीतिपदार्थप्रत्याख्यानं न युज्यते." इति हेलाराज:, दिक्समु. १८।
"तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्।"
५. वा. प. प. का. साधनसमु. कारिका–४२।
६. "स: ह्यपूर्वापर: परमार्थेन अथवा कालशक्तिवशात् चिरक्षिप्रादिक्रमेण लक्ष्यते" इति हेलाराज:, वा. प. प. का. साधनसमु. कारिका–४२।

## (ख) सांख्यदर्शनदिशा कालस्वरूपम्–

वाक्यपदीये सांख्यदर्शनानुसारमपि कालस्वरूपं निरूपितमस्ति। परन्तु समयेऽस्मिन्नुपलभ्यमान-सांख्यग्रन्थेषु कालस्य तत्स्वरूपं च लभ्यते। कालभेदविचारप्रसङ्गे अस्य निरूपणम् अग्रे संविधास्ये। इदानीमुपलब्धग्रन्थानुसारं सांख्ये कालस्य सत्ता न स्वीक्रियते। सांख्यदर्शने कालस्य चर्चैव नास्ति इति स्वयं वाचस्पतिमिश्रः एवं स्वीकरोति।

वाचस्पतिमिश्रानुसारं सांख्याचार्यैः कालतत्त्वस्य निर्देशः अस्मान्न कृतः यतोहि यैरुपाधिभिः कालभेदः क्रियते त एवोपाधयः कालव्यवहारं जनयन्ति[१]। सांख्याचार्याणामिदमपि मतमुल्लिखितमस्ति वाक्यपदीये। तद्यथा–व्यवहारसौविध्याय क्रियादयः कालस्य उपाधयः सन्ति इति स्वीक्रियते, यतः उपाधयः एव मुख्याः, कालनाम्नः कस्यचिद् वस्तुनः बाह्यसत्ता नास्त्येव, तथा तस्य कल्पितस्वरूपस्य आवश्यकता प्रतीयते तर्हि तत्स्वरूपं बौद्धिकमेव भविष्यति। अनेन मतेन कालस्य लक्षणं बुद्ध्या चिरक्षिप्रादिक्रियाणां यत् संकल्पात्मकं रूपमस्ति तदेव कालः इति भर्तृहरिः प्रोवाच[१]–

**कलाभिः पृथगर्थाभिः प्रविभक्तं स्वभावतः।**
**केचिद् बुद्ध्यनुसंहारलक्षणं तं प्रचक्षते।।२** इति। अत्राऽयं निष्कर्षः–

क्रियाणां बुद्ध्या अनुसंहारलक्षणः कालः, न तु तस्य बुद्धिसङ्कलनातिरिक्तं किञ्चिद् बहिष्तत्त्वम्। बुद्ध्या अनुसंहिताभिश्च क्रियाभिरल्पाभिः क्षिप्रत्वव्यवहारः बहुभिश्च ताभिश्चिरत्वव्यवहारः। रविक्रियाणां सङ्कलनयैव क्षणाहोरात्रादिव्यवहार इति। **'दिक्कालावाकाशादिभ्य'** इति सांख्यसूत्रमादाय सांख्याचार्यैः कालः आकाशस्य तन्मात्रपरिणामः इति स्वीक्रियते।

## (ग) योगदर्शनदिशा कालस्वरूपम्–

योगदर्शनेऽपि कालसम्बन्धितविचारः उपर्युक्तसांख्यदर्शनानुरूप एवास्ति। एकः परमाणुः पूर्वदेशं परित्यज्य उत्तरदेशेन सह यावत् संयुक्तो भवति तावत् एव 'क्षण' इति नाम्ना निगद्यते। क्षणस्य निरन्तरप्रवाहः एव क्रमो भवति। क्षणस्य तत्क्रमस्य च समाहारो न सम्भवति क्षणानां यौगपद्याभावात्। अतो बौद्धिक एव समाहारो भवति। स एव बौद्धिकसमाहारः मुहूर्ताहोरात्रादिरूपे प्रतीयते।

कालः वस्तुशून्यः (अवास्तविकः) बुद्धिनिर्मितः, शब्दज्ञानानुपाती चास्ति। भ्रान्तिवशात् वस्तुरूपे प्रतिभासितो भवति। भर्तृहरिणाऽपि एवमेवोक्तम्–

---

१. "कालश्च वैशेषिकभिमते एको न अनागतादिव्यवहारभेदं प्रवर्तयितुमर्हति। तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रतिपद्यते, सन्तु त एवोपाधयः येऽनागतादिव्यवहार–हेतवः, कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्याः। तस्मान् न कालरूपतत्वान्तराभ्युपगमः" इति तत्त्वकौमुदी, सांख्यकारिका–३३।

२. वा. प. प. का. साधनसमु. कारिका–५७।

**बुद्ध्यवग्रहभेदाच्च व्यवहारात्मनि स्थितेः।**
**तावानेव क्षणः कालो युगमन्वन्तराणि च।।**[१] इति।

अर्थात् यावन्तः क्षणसन्तानाः बुद्ध्या सङ्कल्पात्मकरूपेण एकस्मिन् रूपे गृहीताः भवन्ति, तावत् एक एव कालो भवति। अनेनैव आधारेण मासवर्षादिविभागोऽवगन्तव्यः। क्षणमन्वतरयोः परस्परमयमेव भेदः यद् अपचयस्य पराकाष्ठां गतः कालः क्षणो भवति, तथा उपचयस्य पराकाष्ठां गतः कालः मन्वन्तरो भवति। कालभेदः सर्वथा बुद्धिभेदाधारितोऽस्ति, बाह्यक्रियाभावेऽपि बुद्धिनिवेशिन्या क्रियया चिरक्षिप्रादिकालभेदस्य ज्ञानं सम्भवति। योगिनः प्राणसंचारक्रियया क्षणादीनां परिज्ञानं कुर्वन्तः दृश्यन्ते। लोकेऽपि प्राणगतिभिः कालगते कल्पना भवति।

**"प्रांणसंचारमयी क्रियाकालः"** इति मतस्य दार्शनिकः आधारः (यथा भर्तृहरिणा प्रोक्तः) अयमस्ति यत् सर्वरूपाणां ज्ञाने संक्रान्तिः दृश्यते। सर्ववस्तूनां परिज्ञानं बुद्धौ संक्रान्त्यनन्तरमेव भवति। तथा ज्ञानेनैव सर्ववस्तूनाम् अनुसंहारः अथवा संकलनमपि भवति। तद्यथा अवोचद् भर्तृहरिः–

**ज्ञाने रूपस्य संक्रान्तिः ज्ञानेनैवानुसंहृतिः।**
**अतः क्रियान्तराभावे सा क्रिया काल इष्यते।।**[२] इति।

कालस्य बौद्धिकप्रातिभासिकसत्तायाः सत्वादेव कालः सापेक्षोऽस्ति इति प्रतीयते। योगवाशिष्ठे कालस्य सापेक्षास्वरूपं सम्यक् प्रतिपादितमस्ति।

विरहपीडितः व्यक्तिः एकं दिवसमपि एकवर्षात्मकमिव स्वीकरोति। तथा ध्यानमग्नः व्यक्तिः अहोरात्रमपि नानुभवति कालस्य लघुता एवं दीर्घता सर्वथा सापेक्षैवास्ति। तथाहि–

**देशदैर्घ्यं यथा नास्ति कालदैर्घ्यं तथाङ्गने**[३] इति।

योगवाशिष्ठे कालः संकल्पमात्रत्वेन स्वीक्रियते[४]। बौद्धदर्शनेऽपि कालस्य बाह्यसत्ता न स्वीक्रियते। तदनुसारं क्षणिकप्रवाहरूपविज्ञानसंततिः एव कालः। इति।

**(घ) अद्वैतदर्शनदिशा कालस्वरूपम्–**

हेलाराजः अद्वैतमतस्य उल्लेखं कुर्वन् एवमाह यत् ब्रह्मतत्त्वं क्रमरहितमस्ति। परन्तु अविद्यावशात् क्रमरूपे तस्य विवर्तो भवति।

---

१. वा. प. प. का. कालसमु. कारिका–६९।
२. वा. प. प. का. कालसमु. कारिका–७८।
३. योगवासिः (३-२०-२२)।
४. विप्रसंकल्पमात्रोऽसौ कालो ह्यात्मनि तिष्ठति। इति योगवाशिष्ठे-(५-४९-४)।

विवर्तश्च देशे काले च सम्भवति। किञ्चिदपि वस्तु सर्वप्रथमं कस्मिंश्चिद् देशे काले च भवति। कालस्य वास्तविकसत्ता नास्त्येव। प्रब्रह्मणि अध्यारोपिता तस्य प्रातिभासिकसत्तैवास्ति। कालमाश्रित्य यावन्तोऽपि भेदप्रभेदाः क्रियन्ते ते सर्वे अविद्याजन्याः सन्ति। विद्यायाः आविर्भावानन्तरं सर्वप्रपञ्चः विलयं गच्छति। कालस्य अपि विलयो भवति। अतः कालस्य विषये युक्तायुक्तत्वविचारं प्रयासमात्रमेव फलमस्ति।[१]

## (ङ) ज्योतिषशास्त्रदिशा कालस्वरूपम्–

ज्योतिशास्त्रप्रसिद्धग्रहगत्यवलम्बितकालस्वरूपस्य निरूपणं भर्तृहरिणा वाक्यपदीये कृतमस्ति। तद्यथा–

**उदयास्तमयावृत्या ज्योतिषां लोकसिद्धया।।**
**आदित्यग्रहनक्षत्रपरिष्पन्दमथापरे।**
**भिन्नमावृत्तिभेदेन कालं कालविदो विदुः।।**[२] इति।

अर्थात् अपरे ज्योतिषशास्त्रावगन्तारः कालविदः आवृत्तिभेदेन भिन्नम् आदित्यग्रहनक्षत्रपरिंस्पन्दं तत्क्रियारूपमेव कालं विदुः। अस्मिन् श्लोके आदित्यस्य ग्रहत्वेऽपि ब्राह्मणवशिष्ठन्यायेन पृथगुक्तिः। ग्रहाश्च नव। आदित्यसोमादयः सप्त, राहुकेतू द्वाविति। नक्षत्राणि च अश्चिनीभरण्यादयः सप्तविंशतिः।

कथनस्य इदमेव तात्पर्यं यत् सूर्योदयमारम्भ्य सूर्यास्तपर्यन्तमावृत्या भवन् सूर्यसंचारो दिवसः उच्यते। अस्तमयादिरुदयावसानः कालो रात्रिरुच्यते। स च पञ्चदशावृत्तिकः पक्षः भवति। त्रिंशदावृत्तिको मासः भवति। यद्वा चन्द्रमसः सकलनक्षत्रातिक्रमो मासः इत्येव कल्पना ज्ञातव्या। बृहस्पतेरेकराशिसंचरणं संवत्सरः। मासानां द्वादशावृत्या वा वर्षो भवति। एवमन्येषामपि ग्रहनक्षत्राणां ज्योतिषशास्त्रे प्रसिद्धेन गतिप्रचारभेदेन युगमन्वन्तरकल्पमहाकल्पादिप्रविभागः कालोऽनुसर्तव्यः इति तात्पर्यम्।

## (च) आचार्यभर्तृहरेः स्वमौलिकाभिनवसर्वदर्शनविलक्षणकालदर्शनस्वरूपम्–

वाक्यपदीयप्रणेतुः वैयाकरणशिरोमणेः आचार्यभर्तृहरेः मतेन कालः शक्तिविशेषोऽस्ति। सा च शक्तिः स्वातन्त्र्यशक्तिः अस्ति।

---

१. निष्क्रमं हि ब्रह्मतत्त्वं विद्यामयकालकलितमविद्यावशात् क्रमरूपोपग्रहेण यथायथं विवर्तत इति कालानुवेधात् पदार्थानां क्रमेण प्रत्यवभासोऽनादिसिद्धजीवात्मगतः, सर्वस्य च भेदजातस्याविद्यामयत्वात्। कालेनापि दर्शनभेदेन योऽयमृतप्रविभागः, सोऽप्यविद्या विजृम्भितमेव। आविर्भूतायां तु विद्यायां सर्वस्य भेदप्रपञ्चस्य अपगमादयमप्यपैति। अतश्चात्र युक्तायुक्ततया विचारणं प्रयासमात्रफलकमेव। व्यवहारे सर्वस्यैवासत्यतया सत्वव्यवस्थयानुपपत्तेरित्यत्र तात्पर्यार्थः इति। हेलाराजः, वा. प. प. का. कालसमु. कारिका–६२।

२. वा. प. प. का. कालसमु. कारिका–७५,७६।

स्वातन्त्र्यरूपकालशक्त्याश्रयादेव जन्मादिषड्भावविकाराः[१] विश्वविकासकर्मणि सहायकाः भवन्ति।

लोकयन्त्रस्य सूत्रधारस्वरूपे कालशक्तिः स्वीक्रियते। कालः विश्वात्मा अस्ति- **"काल एव हि विश्वात्मा व्यापार इति कथ्यते"**[२]। सत्यभावः परंब्रह्म अस्ति। तस्मिन् परब्रह्मणि नानाशक्तियोगाः समाविष्टाः सन्ति। तैः शक्तियोगैः सः भावकलां कालयति (प्रसारयति)। अत एव तं कालमाहुः आचार्याः। स्वकर्तृशक्तिकारणात् कालशक्तिः स्वातन्त्र्यशक्तिः अस्ति- **"सः कलाः कलयन् सर्वाः कालाख्यां लभते विभुः"**[३] इति। अस्याः कारिकायाः व्याख्यां कुर्वता हेलाराजेनोक्तम् **"विश्वात्मैक एव परब्रह्माभिधानः सत्यो भाव, स एव नानाविधकार्यकारितयानन्तशक्तित्वेन व्यवह्रियते। तथा च क्रमिकांश्चक्रभ्रमिवत् परावर्तमानान् भावान् प्रकाशयन् कालयति भूतानीति काल इत्युच्यते। सः विभुः स्वतन्त्रः**[४] इति।

हेलाराजः वारद्वयं कालं स्वातन्त्र्यशक्तिस्वरूपे प्रकटीचकार-**अत एव स्वातन्त्र्यशक्तिः कालः इति वाक्यपदीये सिद्धान्तितम्**[५]। इति तथा **"कालाख्या स्वातन्त्र्यशक्तिः ब्रह्मणः इति तत्र भवद्भर्तृहरेरभिप्रायः"**[६] इति च।

भर्तृहरिः स्वयमपि कालं स्वातन्त्र्यशक्तिरूपे उल्लिलेख।[७] भर्तृहरिः कालशक्तेः सहकारिणीनाम् अवान्तरशक्तीनाम् अपि उल्लेखं चकार।

वाक्यपदीये प्रतिबन्धशक्तिः, अभ्यनुज्ञाशक्तिः, क्रमशक्तिः, समवायशक्तिः तथा जराख्यशक्तिः उल्लिखिताऽस्ति। एतासु प्रथमे द्वे अतीव महत्वपूर्णे स्तः।

## प्रतिबन्धाभ्यनुज्ञे शक्ती

कस्याश्चित्क्रियायाः साधनशक्तीनां व्यापारस्य विघातः प्रतिबन्धो भवति। तथा प्रतिबन्धविपरीता अभ्यनुज्ञा भवति काचित् शक्तिस्तु प्रतिबध्नाति काचिच्च प्रतिबन्धम् अपसारयति। प्रतिबन्धात्मकः अप्रतिबन्धात्मकश्च व्यापारः सर्वत्र भवतीति दृश्यते।

---

१. अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड् भावभेदस्य योनयः।। इति।

२. वा. प. प. का. कालसमु. कारिका-१२।

३. वा. प. प. का. कालसमु. कारिका-१४।

४. वा. प. प. का. कालसमु. कारिका-१४।

५. वा. प. प. का. कालसमु. कारिका-१४।

६. वा. प. प. का. कालसमु. कारिका-६२।

७. कालाख्येन हि स्वातन्त्र्येण सर्वाः परतन्त्रः जन्मवत्यः शक्तयः समाविष्टाः कालशक्तिवृत्तिमनुपतन्ति। ततश्च प्रतिभावं वैश्वरूपस्य प्रतिबन्धाभ्यनुज्ञाभ्यां शक्त्यवच्छेदेन क्रमवानिवावभासोपगमो लक्ष्यते। सर्वेषां हि विकाराणां कालान्तरेषु अपि अपेक्षावतां प्रतिबन्धजन्मनामभ्यनुज्ञया सहकारिकारण कालः' इति वा. प. ब्रह्मकाण्डे श्लोक-३, हरिवृषभकृतस्वोपग्रहवृत्तिः।

यथा कस्मिंश्चित् वृक्षे किसलयानाम् अभ्यनुज्ञा तथा पल्लवानां प्रतिबन्धः भवति। पुनश्च किसलयानां प्रतिबन्धः तथा पल्लवानाम् अभ्यनुज्ञा भवति। भावानां स्थगनं तथा उन्मज्जनं जन्म विनाशश्च आभ्यां प्रतिबन्धाभ्यनुज्ञाभ्यां द्वाभ्यां शक्तिभ्यां जायते। पौर्वापर्य्यस्य भानम् एतयोः शक्तिद्वयोः क्रिया अस्ति। कालः प्रतिबन्धाभ्यनुज्ञाभ्यां समस्तं विश्वं विभाजितं करोति[१]।

भर्तृहरेरयमस्ति अभिप्रायः यद् यदि प्रतिबन्धाभ्यनुज्ञे इमे स्वव्यापारं न कुर्यातां तर्हि सर्वभावानामुत्पत्तिः युगपदेव स्यात्। बीजाङ्कुरनालकाण्डादिषु पौर्वापर्यक्रमः विच्छिन्न एव स्यात्, तथा साङ्कर्यमेवाच्छादितं स्यात् तथाहि–

> यदि न प्रतिबध्नीयात् प्रतिबन्धञ्च नोत्सृजेत्।
> अवस्था व्यक्तिकीर्येरन् पौर्वापर्यविनाकृतः।।[२]

हेलाराजोऽपि स्वव्याख्यायां स्वाभिप्रायं प्रकटीचकार[३]। सर्गस्थितिप्रलयादयोऽपि कालकृतप्रतिबन्धाभ्यनुज्ञावशाद् भवन्ति। अतीतानागतावपि क्रमशः प्रतिबन्धाभ्यनुज्ञयोः पर्य्यायौ स्तः।

प्रतिबन्धाभ्यनुज्ञयोः परस्परं विरोधो नास्ति। प्रतिबन्धाभ्यनुज्ञे एकस्मादेव शक्तितः सञ्चालिते स्तः। शकुन्ततन्तुदृष्टान्तादेतत् स्पष्टतामायाति। तथाहि–पुरा काले एतदासीत् यत् आखेटकः कमपि पक्षिणं एकस्मात् तन्तुतः बध्नातिस्म, यथावसरं सः तं पक्षिणम् उड्डयनाय स्वहस्तात् मोचयतिस्म। अनन्तरं च स्वहस्तस्थितं पक्षिबद्धं तन्तुम् आकर्षतिस्म। सः पक्षी तद्देशपर्यन्तमेव उड्डयनक्रियां कर्तुं शक्नोतिस्म यावत् देशपर्यन्तं सः तन्तुः विस्तृतः भवतिस्म। तस्य पक्षिणः उड्डयनं पुनः प्रत्यावर्तनं च तत्तन्तोः संकोचविकोचाधीनं भवतिस्म। आखेटकश्च अन्यपक्षिणं स्वाधीनं कर्तुम् एतादृशं व्यापारं करोति।

अस्य दृष्टान्तस्य इदमेव तात्पर्यं यद् अभ्यनुज्ञा शक्तिः आखेटकस्य तत्तन्तोः विस्तारमिवास्ति। तथा च तत्तन्तोः संकोचमिव प्रतिबन्धशक्तिः अस्ति। उभयोः शक्त्योः नियन्ता काल एव हेमन्तौ शक्तिं कुण्ठयति पुनश्च स एव वसन्ततौ उद्भावयत्यपि। कालनामकतन्तुतः प्रतिबन्धिताः सर्वेऽपि पदार्थाः संकोचविकासोत्पत्तिध्वंसानाम् अनुभवं कुर्वन्ति।

कालस्वरूपप्रसेवके (बोरे में) समग्रः विश्वः स्थितः अस्ति। तस्मिन्नेव कालप्रसेवके (बोरे में) अयं विश्वः जायते, अस्ति, परिणमते, वर्द्धते, अपक्षीयते, विनश्यति च।

---

१. प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते। इति कालसमु. कारिका–४।

२. वा. प. प. का. कालसमु. कारिका–५।

३. "कालकृतप्रतिबन्धाभावाद् युगपद् भावानामुत्पत्तिः स्यादिति बीजाङ्कुरनालकाण्डादीनामानुपूर्वीनियमाभावात् सङ्करः स्यादिति कारणादुदयतामपि भावानां कालपरिवासदर्शनादवश्यम् अपेक्षणीयः कालः। इति हेलाराजः, कालसमु. कारिका–५।"

**जराख्याशक्तिः–**

जराख्या शक्तिः प्रतिबन्धशक्तिस्वरूपैवास्ति। लोकव्यवहाराद् इयं शक्तिः भर्तृहरिणा संगृहीतास्ति। चराचराणां सर्वेषां यौवनं कुण्ठयती सती जराशक्तिरियं विघातिकाऽस्ति। अत एव आह भर्तृहरिः–

**जराख्या कालशक्तिर्या शक्त्यन्तरविरोधिनी।**
**सा शक्तिं प्रतिबध्नाति जायन्ते न विरोधिनः।।**[१] इति।

जीर्यते भावोऽनया इति जरा, अनया शक्त्या भावेषु कार्यकारिता शक्तिः प्रक्षीणा भवति। येन प्रध्वंशः प्रत्यासन्नः अस्तीति लक्ष्यते।

**क्रमशक्तिः–**

क्रमाख्या शक्तिः सा शक्तिः अस्ति, यामाश्रित्य उपसंहृतं वस्तु स्वावयवेषु पुनः अभिव्यक्तं भवति। भर्तृहरिः क्रमशक्तेः उल्लेखं शब्दाभिव्यक्तिप्रक्रियाप्रसङ्गे चकार। अन्तःकरणस्थितशब्दे तस्य विभागाः प्रत्यस्तमिताः भवन्ति, विलीनाः भवन्ति। विवक्षायां सत्यां तस्मिन् अन्तःस्थितशब्दे पदवाक्यादिविवर्तस्वरूपे प्रत्येकावयवानां विकासो भवति। परन्तु सः क्रमादेव भवति। अवयवानां क्रमिकावभासकरणमेव क्रमाख्याशक्तेः कार्यमस्ति।

क्रमादुदयः क्रमशः प्रत्यस्तमितभवनम् इति उभयात्मिका क्रिया एव तस्याः क्रमाख्याः शक्तेः क्रिया अस्ति। वस्तुतः क्रमः क्रियायाः धर्मोऽस्ति। एतत् सर्वं भर्तृहरिणा स्वयमेवोक्तम्–

**वृत्तिः तस्य क्रियारूपा भागशो भजते क्रमम्**[२] इति।

अस्य व्याख्यावसरे स्वयं भर्तृहरिरुवाच– **"प्राप्तविवक्षाप्रतिबोधायामन्तःशब्दवृत्तौ वाक्यपदविवर्तधर्ममुद्गृह्य प्रत्येकमवयवोद्ग्राहेण क्रमशक्तिं परिगृह्णाति"**[३] इति।

भर्तृहरिः इमां क्रमशक्तिं कालमीमांसायामेव स्वीचकार। कालः विश्वात्माऽस्ति। तेनैव विश्वविकाशः सञ्जायते। सोऽपि विकाशः क्रमाख्यां शक्तिमाश्रित्य भवति। कालस्य या शाश्वद्वृत्तिः विद्यते सा प्रतिबन्धाभ्यनुज्ञाभ्यां परिलक्षिता भवति। कालवृत्या विश्वः अवयवेषु विभक्तो भवति। स च विभागः क्रमिकः भवति।

---

१. वा. प. प. का. कालसमु. कारिका–२४।

२. वा. प. ब्रह्मकाण्डे श्लोक–५१

३. श्रीरामसुरेशत्रिपाठिमहोदयोऽपि 'संस्कृतव्याकरणदर्शननामकस्य स्वग्रन्थस्य शतसंख्याकपृष्ठे एवम् उदाहृतवान्–क्रमाख्यां शक्तिम्। यतस्तेऽवयवाः "क्रमेणावभासमुपगच्छन्ति। तेषाम् अवयवानां यः क्रमेणोदयप्रत्यस्तमय प्रत्यचभसः सैवास्य क्रिया" इति हरिवृषभवाक्य–पदीय–१–५२, टीका, लाहौर संस्करण। इति।

क्रमोऽपि मुख्यतः क्रियाधर्मोऽस्ति परन्तु क्रियाऽपि कालसम्बन्धादेव स्वस्वरूपं गच्छति। अतः कालेऽपि अस्ति क्रमः। भावाः सततपरिणामिनो सन्ति। तेषु परिवर्तनं सदैव भवद् अस्ति। तद् परिवर्तनाधारोऽपि क्रम एवास्ति। कालः क्रमस्वरूपे स्थितः, अत एवाह भर्तृहरिः–

**प्रतिबन्धाभ्यनुज्ञाभ्यां वृत्तिर्या तस्य शाश्वती।**
**तया विभज्यमानोऽसौ भजते क्रमरूपताम्।।**[१] इति।

अदृष्टवशात् परमाणुषु क्रिया समुत्पद्यते। परमाणूनां परस्परसम्मेलनात् द्व्यणुकादयो जायन्ते, तैश्च सर्वे पदार्थाः स्वस्वरूपमवाप्नुवन्ति। एतेषु सर्वव्यापारेषु क्रमाख्या कालशक्तिरेव परमोपादेयतां भजते। हेलाराजेनापि कथितं यत् **"अत्र च सर्वत्र क्रमाख्या कालशक्तिः सव्यापारेऽभ्यनुज्ञेयम्"**[२] इति।

केचिद् वदन्ति यद् विश्वः स्ववास्तविकस्वरूपे अक्रमः एवास्ति। सः तु ब्रह्मणः विवर्तः अस्ति। कालश्च ब्रह्मणः शक्तिः अस्ति। स च अविद्यायाः सहकारी अस्ति। अविद्यया अक्रमः क्रमवानिव भवति। क्रमाध्यासादेव कालभेदज्ञानं भवति। अतः क्रमम् एव कालः इत्युच्यन्ते आचार्याः। निमेषादयोऽपि सूक्ष्मक्रमरूपकालात् परिच्छिन्नाः सन्ति। अतः सर्वपदार्थेषु क्रमाख्या कालशक्तिः सूक्ष्मस्वरूपे अनुस्यूतास्ति।

**सर्वप्रकारकाः संवित्तरङ्गाः क्रमादेव अनुप्राणिताः भवन्ति। पश्यन्तीरूपसंवित्क्रममाश्रित्यैव अभिव्यक्तो भवति।**[३] इति हेलाराजः।

## समवायशक्तिः

कालप्रसङ्गे समवायशक्तिः जन्मादिक्रिया विश्लेषणे व्यवहृता दृश्यते। समवायशक्तिः सा शक्तिः अस्ति या कारणकार्ययोः भेदं तिरोहितीकरोति। अस्याः शक्तेः साहचर्यात् कारणकार्ये अभिन्ने इव प्रतिभातः। भर्तृहरिविचारानुसारं विशिष्टकालसम्बन्धात् परिपाकप्राप्तशक्तिषु नित्यक्रिया अभिव्यक्ता भवति। सामान्यभूतप्रवृत्तिः क्रिया अस्ति। परमाणुषु कार्यजनकशक्त्यभिमुखात् परस्परं संश्लेषो भवति, अथवा मूलतत्त्वे प्रेरणामयकर्मविशेषः अभिव्यक्तो भवति। तस्मात् कदाचित् अद्भुतशक्त्या फलाभिव्यक्तिः भवति। कार्यकारणयोः एकत्वबुद्धिः समवायशक्त्या भवति–

**ततस्तु समवायाख्या शक्तिर्भेदस्य बाधिका।**
**एकत्वमिव ता व्यक्तीरापादयति कारणैः।।**[४] इति।

१. वा. प. प. का. कालसमु. ३०।
२. वा. प. प. का. कालसमु. २०।
३. अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना परिगृहीतक्रमेव चकास्तीति कृतनिर्णयं वाक्यपदीये शब्दप्रभायामस्माभिः" इति हेलाराजः, वा. प. प. का. कालसमु. ६२।
४. वा. प. प., का. कालसमुद्देशे–१८।

एतेभ्यः सर्वेभ्यः व्यापारेभ्यः जन्मनः अभिव्यक्तिः भवति। तथा जन्म अपि कालस्य एव व्यापारः। अनेनैव प्रकारणे स्थितिरपि कालपरतन्त्रैवास्ति। एतत्सर्वं कालस्य अभ्यनुज्ञाशक्त्यभ्यन्तरे समायान्ति। उपर्युक्ताः सर्वाऽपि शक्तयः स्वातन्त्र्यशक्तिस्वरूपकालस्यैव शाखाः सन्ति।

## स्वातन्त्र्यशक्तिः कर्तृशक्तिश्च

आचार्यो भर्तृहरिः स्वातन्त्र्यशक्तिकर्तृशक्त्योः मध्ये कमपि भेदं नाचरति। ब्रह्मणः कर्तृशक्तिः क्रममवाप्य कालशक्तिस्वरूपे अभिव्यक्ता भवति[२]। हरिवृषभस्तु स्वातन्त्र्यशक्तिं कर्तृशक्तिस्वरूपे एव गृह्णाति, तथाहि–**"स्वातन्त्र्यकर्तृशक्तिः पदार्थनिष्पादनोपसंहारयोग्या कर्तृशक्तिः"**[३] इति।

## भर्तृहरेः कालदर्शनं तथा काश्मीरशैवागमे कालस्वरूपम्

भर्तृहरेः कालशक्तिकल्पना काश्मीरशैवागमे संगृहीतकालस्वरूपात् सम्यक् परिचिताऽस्ति। भर्तृहरेः कालः यथा द्रव्यं नास्ति तथैव शैवागमेऽपि कालः द्रव्यात्मकः नास्ति। भर्तृहरिः यथा क्रमः कालस्य धर्मः इति स्वीकरोति तथैव शैवागमेऽपि क्रमः क्रियायाः सर्वस्वम्, फलतः कालाधारः स्वीक्रियते।

क्रमाभासिता भगवतः शक्तिः कालशक्तिः अस्ति। व्याकरणसम्प्रदायमिव कश्मीरशैवागमेऽपि सूर्यादिसञ्चाररूपप्रसिद्धपरिणामक्रिया अन्याप्रसिद्धक्रियाणां परिच्छेदिका अस्तीति स्वीकृता, सा एव क्रिया भावानाम् अवच्छेदकत्वात् काल इत्युच्यते। सूर्यादिसंचारस्य क्रिया उपलक्षणस्वरूपा अस्ति। बसन्तकाले क्रमस्य दर्शनं कोरकमुकुलपिकस्वरादिविचित्रपरिवर्तनेषु भवितुं शक्नोति। सूर्यादिगतः यः नियतस्वभावभेदः अस्ति सः क्रमः अस्ति, स एव कालः।

अभिनवगुप्तानुसारं सर्वदर्शनकालस्वरूपस्य अन्तर्भावः क्रमदर्शने भवति। वैशेषिकाणां द्रव्यरूपकालः परत्वापरत्वादिनां क्रममय एवास्ति। सांख्यदर्शने कालः राजःस्वभावः अस्ति, रजोगुणश्च प्रवर्तकस्वरूपे क्रममयः एवास्ति।

प्रवृत्तिश्च क्रमाश्रिता भवति। बौद्धानामपि सन्तानप्रवाहमयः कालः क्रमात् सर्वथा रहितः नास्ति[३]।

---

१. अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः। वा. प. ब्र. का.३। तस्य क्रमवद्भिः मात्रारूपैः कर्तृशक्तिः प्रविभज्यमाना विकारमात्रागतं भेदरूपं तत्राध्यारोपयति। इति हरिवृत्तिः, ब्र. काणु-३।

२. इति श्री रामसुरेशात्रिपाठिः, संस्कृतव्याकरणदर्शन पृ. २१८।

३. तेन सूर्यसंचारादिभिः योऽन्यो लक्ष्यते प्रवहणधर्मा......... चिरशीघ्रताद्यसंकीर्णभावस्वभवोत्थापको वैशेषिकाणां द्रव्यरूपः कापिलानां रजः स्वभावः प्रवर्तनात्मकत्वात्, वैयाकरणानां नित्याश्रितप्रवृत्तिस्वभावः, सौगतानां सन्तन्यमानभावैकपरमार्थः सोऽपि वस्तुतः क्रमरूपतां न अतिक्रामतीति क्रम एव नाम बहिः कालः इति व्यवह्रियते। इति-ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, तृतीयभाग, पृष्ठ-५।

भर्तृहरेः स्वातन्त्र्यशक्तिः तथा काश्मीरशैवागमे संगृहीता स्वातन्त्र्यशक्तिः समानैवास्ति। एतद् दर्शनद्वयमपि तां स्वातन्त्र्याख्यां शक्तिं कालनाम्ना प्रकटयति। सः कालः एकत्र ब्रह्मणः शक्तिरूपः अपरत्र शैवागमे सः कालः परमेश्वरस्य शक्तिः अस्ति।

शैवागमे भगवतः इच्छाशक्तेः नाम स्वातन्त्र्यशक्तिः अस्ति। तथाहि– **"स्वतन्त्र इति तस्येच्छाशक्तिः स्वातन्त्र्यसंज्ञिता"**[१] इति। 'प्रकाशः' इति 'विमर्शः' इति च स्वतन्त्रस्य स्वरूप एव अस्ति। शैवागमे प्रकाशः ज्ञानस्य तथा विमर्शः क्रियायाः प्रतीकः अस्ति। स्वातन्त्र्यशक्तिश्च भगवतः कर्तृशक्तिरस्ति। भगवति यदा आत्मानम् अथवा अन्तर्व्यवस्थितचिन्मात्रस्वरूपभावसंसारम् अवभासयितुं समीहा भवति तदा भगवतः कर्तृशक्तिः निर्माणकारकमायाशक्तिसम्बन्धात् कालक्रमरूपे अवभासिता भवति। स्वयमात्मानं प्रकाशयितुं परमेश्वरस्य स्वातन्त्र्यशक्तिः कालोत्थापकत्वात् तस्य कालशक्तिरित्युच्यते। सा एव स्वातन्त्र्यशक्तिः प्रमातृप्रमेयादिस्वरूपे क्रियामाश्रित्य विस्तारमाप्नोति।

क्रिया प्रधानरूपेण प्रतिभासिता सती अपि कालशक्तिः अनुबद्धा भवति। सर्वथा कालशक्तिः स्वातन्त्र्यशक्तिस्वरूपा एव। तथाहि– **"यस्याः परमेश्वरस्वातन्त्र्यशक्तेः, सा कालोत्थापकत्वात् भगवतः कालशक्तिरिति उच्यते, अध्याहितकलां यस्य कालशक्तिमुपाश्रिता इत्यादौ"**[२] इति।

अभिनवगुप्तेन अत्र स्वातन्त्र्यशक्तिसम्बन्धे स्ववक्तव्यपुष्ट्यर्थं वाक्यपदीयस्य कारिका उद्धृता अस्ति। एतेन मन्यामहे यत् एतयोः दर्शनकारयोः कालः समान एव, तथा स्वातन्त्र्यशक्तिरपि समानैवास्ति।

भर्तृहरेः स्वातन्त्र्यशक्तौ तथा शैवागमगृहीतस्वातन्त्र्यशक्तौ यदि भेदः अस्ति तर्हि सः भेदः अयमस्ति यत् शैवागमे स्वातन्त्र्यशक्तिः अनेकविभिन्नरूपेषु उपचारिता अस्ति। परन्तु भर्तृहरिः अत्र विशेषतया न चचर्च। तथा शैवागमगृहीतस्वातन्त्र्यशक्तेः सम्बन्धः परावाणीतः अस्ति, तद्यथा–

**"चितिः प्रत्यववर्शात्मा परावाक् स्वरसोदिता।**
**स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः।।**[३]**"** इति।

परन्तु भर्तृहरिः परावाचः सत्तातः अस्य नास्ति सम्बन्धः इति मेने। स्वातन्त्र्यशक्तिस्वरूपकालस्य सम्बन्धः यदि वाणीतः अस्ति तर्हि पश्यन्ती नाम वाचः अस्ति, इति हेलाराजो लिलेख।[४] स्वातन्त्र्यशक्तेः मूलश्रोतः किमस्ति? महाभाष्ये स्वातन्त्र्यशक्तेः संकेतो नैव दृश्यते। तथा शैवागमस्य यावन्तोऽपि

---

१. इति अभिनवगुप्त, मालिनी विजय, वार्तिक–८७।
२. इति ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, द्वितीयभाग, पृष्ठ–८।
३. इति ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, द्वितीयभाग, पृष्ठ–८।
४. अक्रमा हि पश्यन्तीरूपा संवित् प्राणवृत्तिमुपारूढा कालात्मना पंरगृहीतक्रमेव चकास्तीति हेलाराजः, वा. प. प. का. कालसमु.–६२।

लेखका: संप्रति विज्ञायन्ते तेऽपि सर्वे भर्तृहरितः परवर्तिनः सन्ति। एतत्संभाव्यते यत् शैवागमस्य परम्परायाः इतिहासः अतीव प्राचीनः स्यात्, यतः भर्तृहरिः आगमेभ्यः अतीव प्रभावितः आसीत्। तथा व्याकरणदर्शनमपि आगमोऽस्ति इति स्वीकरोतिस्म[१]।

केचित् स्वातन्त्र्यशक्तेः मूलोद्भावकः पाणिनिं मन्यन्ते[२]। तेषां मन्तव्यस्याधारः पाणिनेः **'स्वतन्त्रः कर्ता'** (१-४-५४) इति सूत्रमस्ति। स्वतन्त्रशब्दात् स्वप्राधान्यम् अभिव्यक्तं भवति।[३]

व्याकरणसम्प्रदाये कर्तुः स्वातन्त्र्यं न तु शक्तिस्वरूपे स्वीकृतं नापि तस्य सम्बन्धः कालात् स्वीकृतः अस्ति। स्वयं भर्तृहरिणाऽपि 'स्वतन्त्रः कर्ता' सूत्रस्य व्याख्यायां महाभाष्यदीपिकायां स्वातन्त्र्यशक्तेः उल्लेखो न कृतः। स्वयं पाणिनिनापि स्वातन्त्र्यं प्रयोजकहेत्वर्थेऽपि स्वीकृतम्, तथा "कर्तृकरणयोस्तृतीया" (२-३-१८) इत्यादिसूत्रेषु तत् साधनरूपेऽपि व्यवहृतम्।

## कालस्य एकत्वं नित्यत्वं विभुत्वञ्च

आचार्यो भर्तृहरिः कालस्य एकत्वं नित्यत्वं विभुत्वं च प्रतिपादयति। कालो व्यापकोऽस्ति। परापरचिरक्षिप्रादीनां ज्ञानं सर्वान् सर्वदेशे समानमेव भवति। अनेन कालस्य व्यापकता स्पष्टतामायाति। कालः अमूर्तः अस्ति, अतः नित्योऽस्ति।

**(अ) एकः–**

सः कालः एकोऽस्ति। तस्मिन् भेदः कल्पितोऽस्ति। यद्यपि आचार्येण भर्तृहरिणा–

**'अभेदे यदि कालस्य ह्रस्वदीर्घप्लुतादिषु।**
**दृश्यते भेदनिर्भासः स चिरक्षिप्रबुद्धिकृत्।।**

**ह्रस्वदीर्घप्लुतावृत्या नालिका सलिलादिषु।**
**कथं प्रचययोग्यः स्यात् कल्पनामात्र हेतुकः।।**[४]

इत्यादिना आशङ्कयता इदमुक्तं यत् ह्रस्ववर्णोच्चारणे अल्पः कालः, दीर्घवर्णोच्चारणे अधिकः, प्लुतवर्णोच्चारणप्रसङ्गे ततोऽप्यधिकः समयः अनुभूयते। अतः नैको कालः? इति, तथापि स्वयमेवाग्रे समाहितम्–

---

१. सत्या विशुद्धिस्तत्रोक्ता विद्यैवेकपदागमा। इति वा. प. ब्रह्मकाण्डे कारिका–९।
२. डा. के. सो. पाण्डेय, एन हिस्टारिकल एण्ड फिलासफीकल स्टडी ऑफ अभिनवगुप्त, पृ. २०३–२०४।
३. स्व आत्मा तंत्रं प्रधानं यस्य सःस्वतन्त्रः उच्यते। इति महाभाष्यप्रदीपः।
४. वा. प. प. का. कालसमु. कारिका–६३–६४।

**विशिष्टमवधिं तं तमुपादाय प्रकल्पते।**
**कालः कलावतामेकः क्षणमासर्तुभेदभाक्।।**[१] इति।

अतः कालः एक एवास्ति। भेदस्तु काल्पनिक एवास्ति। अभिन्नोऽपि कालात्मा स्वशक्तिवैचित्र्यात् तरुलतादिषु पदार्थेषु स्वभेदं दर्शयति, एषा कालक्रीडा इति भर्तृहरिणा सम्यगुक्तम्–

**आक्रीड इव कालस्य दृश्यते यः स्वशक्तिभिः।**
**बहुरूपस्य भावेषु बहुधा तेन भिद्यते।।**[२]

पद्मश्रीविभूषित डॉ. रघुनाथशर्मा अपि सम्यग् विवेचितवान् इति तत्रैव द्रष्टव्यम्।[३] यथा पथिकस्य गतिभेदात् मार्गभेदो न जायते नापि तस्य अवरुद्धे सति मार्गावरोधो भवति तथा क्रियादिभेदात् कालस्वरूपे भेदो नैव जायते। यथा च मार्गस्य दूरत्वं समीपत्वं वा पथिकगत्याधारितं भवति न तु स्वभावतः मार्गभेदत्वमस्ति तत्, तथैव दीर्घकालः उत अल्पकालः अपि क्रियासन्तानस्य दीर्घतामुत अल्पतामाश्रित्य रात्रिरागता, बसन्तो नावशिष्टः इत्यादिज्ञानं क्रियापरमस्य द्योतकं न तु कालोपरमस्य।

यथा एकमेव मनुष्यं क्रियाभेदात् छत्ता, लौहकारः इत्येवं जनाः वदन्ति एवमेव विशेषपुष्पफलादिसमुत्पादकक्रियाभेदात् बसन्तादिनामानि कालस्य भवन्ति। अतः कालः एक एवास्ति।[४]

**(ब) नित्यः–**

वाक्यकाण्डे भर्तृहरिणा कालः नित्यः अस्तीति कण्ठरवेणोक्तम्–

**"सः नित्यः परमात्राभिः कालो भेदमिहार्हति"**[५] इति। कालशक्तिः प्रतिबन्धाभ्यनुज्ञा-शक्तिभ्यां परापरचिरक्षिप्रादीन् परिचाययति।[६]

यदि नित्योऽस्ति कालः तर्हि तस्मिन् कथं पौर्वापर्यसम्भवः? इति प्रश्नोत्तरे भर्तृहरेः कथनमिद-मस्ति यत् पौर्वापर्यं तु कालशक्तिमहिमा अस्ति यत् सः एकोऽपि नित्योऽपि सन् क्रमरूपे प्रतिभासितः

---

१. वा. प. प. का. ाकलसमु. कारिका-६८।
२. वा. प. प. का. ाकलसमु. कारिका-७२।
३. एकस्याऽपि कालस्य स्वशक्तिभिः बहुरूपस्य यो भावेषु बहुधा आक्रीड इव दृश्यते। तेनोपाधिभूतेन कालो भिद्यते यथा वासन्ती विकासेन बसन्तकालः, कुन्दप्रसवेन माघमासः, हंसगतिरवाभ्यां शरत्कालः, मयूरनृत्येन केकया च मधुरया वर्षाकालः, सूर्यस्य गतिविशेषैः अनयभेदः इत्यादिकं कालस्य आक्रीडोदाहरणम्। पुनरपि रजनी पुनरपि दिवसः। सायं प्रातः पुनरायातः। कालः क्रीडति गच्छत्यायुः। तदपि न मुञ्चत्याशा वायुः।। इति चर्पटमञ्जरी इत्यपि उदाहरणमिति। इति अम्बाकर्त्री।
४. इति संस्कृतव्याकरणदर्शने रामसुरेशत्रिपाठी, पृ.-२२२।
५. वाक्यपदीयवाक्य का.-२४।
६. कालख्या हि कर्तृशक्तिः कार्येष्वेव प्रतिबन्धाभ्यनुज्ञाभ्यां पौर्वापर्यं प्रकल्पयति। इति वा. प. वाक्य का. कारिका-२२, हरिवृत्तिः।

भवति। अत्र भर्तृहरिणा बौद्धदर्शनस्य वेदान्तदर्शनस्य च क्रममीमांसा उल्लिखिता अस्ति। बौद्धदर्शने बुद्धिलक्षणः अक्रमः अस्ति। तस्मिन् सर्वेषां विरुद्धोऽविरुद्धोऽपि रूपः प्रतिभासितः भवति। क्रमः एकत्वस्य अतिक्रमणं न करोति। वेदान्तदृष्ट्या विश्वात्मा एकोऽस्ति। क्रमावभासः तस्य एकत्वस्य व्याघातको न भवति। तथाहि–

**"क्रमप्रत्यवभासत्वम् एकत्वानतिक्रमणे अक्रमे बुद्धिलक्षणे क्षणिकवादिनः सर्वस्य विरुद्धरूपमिवाविरुद्धं भवति। त्र्यन्तविदां तु विश्वात्मन्येकत्वानतिक्रमेण क्रमप्रत्यवभासत्वं भवति।[1] त्र्यन्तविदां तु विश्वात्मन्येकत्वानतिक्रमेण क्रमप्रत्यवभासत्वं भवति।[1]"** यतोहि मात्राणां सत्ता उदयास्तमयी अस्ति। अतः मात्राभेदमाश्रित्य कालभेदः न सम्भवति। ताः स्वयमसत्यः इव सन्ति। तासामभावे तु मात्रापरिणाममाश्रितः क्रमोऽपि न सम्भवति। अनया रीत्या परिणामजन्यः भेदः अनित्योऽस्ति। पूर्वस्य अपरेण सह नास्ति कश्चित् सम्बन्धः। एकः अपरस्मात् सर्वम् असंस्पृष्टमेवास्ति।

पूर्वः अपरश्चापिं निरुपाख्यः अस्ति। पूर्वापरयोः परामर्शः अहंकारेण भवति। सूक्ष्मः अभेद्यः तथा परिणामरहितः सन्नपि पूर्वापरयोः सम्बन्धः मिथ्याभ्यासवशादेव अज्ञानिनं पुरुषं दीर्घमिव प्रतिभाति। तदेवम्प्रकारेण सर्वे व्यवहाराः एकस्माद् धर्माद् आबद्धाः, एकस्मिन् धर्मे प्रतिष्ठताः तथा अभिन्नकालयुताः सन्ति। मात्राभेदाः असतः सन्तिः। असतः असता सह, सता सह च सम्बन्धे कश्चिद् क्रमो न भवति। शशशृङ्गस्य उष्टशृङ्गेण सह अथवा हिमालयेन सह कश्चिद् क्रमो न भवति। तथाहि– **"तदेतस्मिन् पक्षे एकधर्मावबद्धेषु एकधर्मप्रतिष्ठितेषु अभिन्नकालेषु सर्वव्यवहारेषु कीदृशः सतामत्यन्तासतां च मात्राभेदानां क्रमः। न हि शशविषाणस्योष्ट्रविषाणेन हिमवता वा कश्चिदपि क्रमो विद्यते"**[2] इति।

भर्तृहरिणा क्रमाख्यां शक्तिमादाय तथा तच्छक्तिसामर्थ्यात् मात्रासु क्रमाभासो भवति इति निरूपितम्–

**"भेदभावनानुगतबुद्धीनामेकत्वेन व्यवहरताम् अनादिना मिथ्याभ्यासेन विहितसमवायानाम् एकस्य बुद्धौ अव्यतिरिक्तासु अनपायोपायिनीषु सर्वमात्रासु क्रमाख्यायाः शक्तेः सामर्थ्यमविद्यमानं प्रकल्प्यते क्रमप्रसिद्धये**[3] इति।" अतः काले क्रमभेदाद् भेदो भवति। कालः औपाधिकभेदाद् भिन्नोऽस्ति, सः स्वतः अभिन्न एव अतः नित्योऽस्ति।

**(स) विभुः–**

**"सः कलाः कलयन् सर्वाः कालाख्यां लभते विभुः"**[4] इत्यनेन कालः विभुः अस्तीति

१. वाक्यपदीयवाक्यकाण्डे–२२, हरिवृत्तिः, लाहौरसंस्करणम्।
२. वाक्यपदीयवाक्यकाण्डे–२४, हरिवृत्तिः, लाहौरसंस्करणम्।
३. वाक्यपदीयवाक्यकाण्डे–२७, हरिवृत्तिः, लाहौरसंस्करणम्।
४. कालसमुद्देशः १४ कारिका।

भर्तृहरिणा स्पष्टमुक्तम्। सः विश्वात्माऽतीति पुनराह–**काल एव हि विश्वात्मा व्यापार इति कथ्यते"**[१] इति। अतः कालः एकः नित्यः विभुरस्तीति सम्यक् सिद्ध्यति।

## कालस्य प्रत्यक्षम् अनुमानं वा

कालविषये कश्चिद् एवं वदति यदयं कालः प्रत्यक्षगम्योऽस्ति। कस्यचिन्मते अयं अनुमेयोऽस्ति। वाक्यपदीये अनुमानपक्षस्य एव समर्थनं प्राप्यते। भर्तृहरिः स्वमतानुसारं विभिन्नाश्रयवत्योः क्रियाद्वयोः उदयास्तसमानत्वेऽपि तयोः चिरक्षिप्रसम्पन्नताज्ञानं कञ्चित्सम्बन्धिपरिच्छेदकम् अन्तरा न सम्भवति। कालस्यानुमाने अयमपि एको हेतुरस्ति–

**क्रिययोरपवर्गिण्योर्नानार्थसमवेतयोः।**
**सम्बन्धिना विनैकेन परिच्छेदः कथं भवेत्।।**[२]

इति हेलाराजोऽप्येवमाह– **द्वयोश्च क्रिययोरुदयानन्तरध्वंसित्वे समानेऽपि चिरेण कृतम्, क्षिप्रं क्रममिति विलक्षणः परिच्छेदः विनैकं सम्बन्धिनम् उपाधिभूतं नावकल्पते**[३] इति। **मूर्तपदार्थानामुपचयापचयादयोऽपि** कालस्य अनुमाने सहायकाः सन्ति। केचित् कालम् अतीन्द्रियमिति **मन्यन्ते** तथा दिग्विपरीतपरत्वापरत्वाभ्यां कालानुमानं कुर्वन्ति। केचिच्च कालस्य प्रत्यक्षम् एव **स्वीकुर्वन्ति**, तथा काले रूपाभावः प्रत्यक्षस्य बाधकः नास्ति, यतोहि प्रत्यक्षत्वं नाम इन्द्रियग्राह्यत्वं **तच्च** काले अस्त्येव।

## कालभेदविचारः

कालस्य स्वरूपः कीदृशः अपि भवेद् भाषायां शाब्दव्यवहारे सः कालः विभिन्नप्रकारकः भवति। व्याकरणदर्शनस्य सम्बन्धः मुख्यरूपेण शाब्दव्यवहारवता कालेन सह अस्ति।

अस्ति, अभूत्, भविष्यदित्यादिक्रियाभेदकविवेचना तेन क्रियते एव।[४] परिणामतः व्याकरणदर्शनं कालं वर्तमानभूतभविष्यदित्येतत्त्रिभेदेषु विभक्तं करोति। तथाहि–

**क्रियोपाधिश्च सन् भूतभविष्यद्वर्तमानता।**
**एकादशभिराकारैः विभक्ताः प्रतिपद्यते।।**[५] इति।

१. कालसमुद्देशः १२ कारिका।
२. वा. प. प. का. कालसमु. २७ कारिका।
३. प्रकाशव्याख्यायां हेलाराजः, कालसमु. २७, कारिका।
४. नास्माभिः दर्शनविवेकः प्रारब्धः, किन्तु शाब्दे व्यवहारे यदेतत् परीक्ष्यम्। अस्ति च भिन्नकालः शाब्दाव्यवहारोऽभूत्, अस्ति, भविष्यतीति। तत्र यथायोमविचारितमरणीयः कालोऽभ्युपगन्तव्यः। इति हेलाराजः, वा. प. प. का. कालसमु. ५८ कारिका।
५. वा. प. प. का. कालसमु. ३७ कारिका।

हेलाराजेन सम्यग्वर्णितमस्ति यत् **"उत्पन्नध्वस्ताः यदा क्रियाः भवन्ति तदा तदुपाधिः कालो भूत इति व्यपदिश्यते। यदा तु सन्निहितसाधनाः सम्भाव्यमानोदयाः क्रियाः तदा तदुपाधिकालो भविष्यत्तां प्रतिपद्यते। प्रारब्धापरिसमाप्तिक्रियोपाधिस्तु वर्तमानसंज्ञः, ते च भूतादयः कालविभागाः, पुनरवान्तरभेदेनैकादशधा भवन्ति**[१] इति। अस्मिन् विभागविषये सन्ति केचिद् दार्शनिकप्रवादाः, येषामुल्लेखः भर्तृहरिणा कृतः, तद्यथा-

## कालस्य शक्तित्रयम्

केचित्स्वीकुर्वन्ति यत् कालस्तु एक एवास्ति, किन्तु तस्य शक्तित्रयमस्ति। कार्यभेदात् कारणभेदोऽनुमीयते। शक्तिभेदादेव कार्यभेदः सम्भवति, अतः कालशक्तिस्वीकरणं भवति। एतच्छक्तित्रयमाश्रित्य उन्मीलनं, निमीलनं दर्शनं तिरोधानं च भवति। एतासु द्वे आवरणात्मिके स्तः। एकश्च प्रकाशात्मकः अस्ति। अतीतानागते शक्ती भावानाम् (पदार्थानाम्) आवरणं कुरुतः। वर्तमानशक्तिं पदार्थान् प्रकाशयति। अनागता शक्तिः आवरणत्मिका सती अपि वर्तमानशक्तिं प्रतिबध्नाति, यतोहि यः अनागतः अस्ति स एव वर्तमानस्य स्वरूपं धारयति। परन्तु अतीता शक्तिः वर्तमानस्य विरोधिनी अस्ति यः अतीतः व्यपगतः सः पुनः वर्तमानो न भवति। मृतः व्यक्तिः न पुनः प्रत्यावर्तते। यः मार्गः निर्गतः भवति सः पुनरग्रे नागच्छति। तथाहि-

**द्वाभ्यां सः किल शक्तिभ्यां भावानां वरणात्मकः।**
**शक्तिस्तु वर्तमानाख्या भावरूपप्रकाशिनी।।**
**अतीताख्या तु या शक्तिस्तया जन्म विरुध्यते।।**[२] इति।

एतासां शक्तीनां विवेचनं परिणामवादमादाय अपि भर्तृहरिणा कृतमस्ति। सत्वरजस्तमांसि एते त्रयो गुणाः नित्याः सन्ति।

एतेषां स्वभावः यद्यपि परस्परं विरुद्धोऽस्ति तथापि त्रयोऽपि एते एकीभूय दीपवर्तिकान्यायेन परस्परं सहयोगं प्राप्य अङ्गाङ्गिभावेन विचित्रसृष्टिं जनयन्ति। एवमेव कालशक्तयः अपि आवरणप्रकाशाभ्यां परस्परविरुद्धाः सत्यः अपि स्वशक्तिबलात् भावानां भेदे क्रमस्य परिज्ञानं कारयन्ति। कालविभागः मार्गविभागम् एव उक्तः। यथा पथिकाः एकस्मिन्नेव मार्गे गतमार्गस्य एवम् अनागतमार्गस्य भेदं कुर्वन्ति। तथैव भावपरिणामानुभवं कुर्वन्तः अतीतानागतादीनां भेदाभिव्यक्तिं कुर्वन्ति। यद् भविष्ये अस्ति तदेव वर्तमाने आगच्छति, तथा यद् वर्तमाने अस्ति तदेव अतीतो भवति। अत एव परिणामवादिनोः पदार्थ 'त्रैयध्विकः' इति वदन्ति।

पातञ्जलदर्शने तु एनं 'धर्मास्तु त्र्यध्वानः'[३] इति रूपे अभिव्यक्तीकृतम् अस्ति।

१. वा. प. प. का. कालसमु. ३७ कारिका।
२. वा. प. प. का. कालसमु. ५०-५१, कारिका।
३. व्यासभाष्यम्-(३-१३)।

अतीतभविष्यवर्तमानाः परस्परं (एकः अपरस्य) सीमानं स्पृशन्ति। एतेषामवियुक्तस्वभावं एकेन प्रसिद्धोदाहरणेन प्रकटीकृतमस्ति।[1]

केचिद् सांख्यवादिनो मन्यन्ते यत् अतीतानागतादयः सत्वरजस्तमसां शक्तयः सन्ति। भावाः सततपरिणामिनो भवन्ति। सर्वभावेषु त्रयो गुणाः सन्ति। शक्त्युद्भवात् तेषां सत्ता प्रतीयते, तथा शक्त्यनुद्भवात् ते असतः प्रतीयन्ते। कालगुणानां शक्तिस्वरूपे कारणत्वात् भावानाम् अभिव्यक्त्यनभिव्यक्तिभ्यां सह कालोऽपि अतीतानागतादिसंज्ञां लभते। एतेषु अतीतानागतौ तमोगुणस्य प्रतीकौ स्तः, यतः तमोगुणः आवरणकः भवति। वर्तमानः सत्वगुणस्य प्रतीकोऽस्ति। यतोहि सत्वगुणः प्रकाशकः अस्तीति स्वीक्रियते। रजोगुणश्च कालमात्रे अन्वितोऽस्ति यतो हि सः प्रवृत्यात्मकः अस्ति।[2] प्रतिबन्धाभ्यनुज्ञाभ्यां कालः प्रेरणात्मकः अस्त्येव। केचिद् सांख्यवादिनः इदमपि आमनन्ति यद् यः अतीतः अस्ति सः पुनः वर्तमानोऽपि भवितुं शक्नोति। पूर्वमिदमुक्तमासीद् यद् यः अतीतः जातः सः पुनः वर्तमानः नैव भवितुमर्हति। जगतः परिवर्तनशीलत्वादपि अतीतः वर्तमानो न भवति अपितु अतीतसदृशः भवितुं शक्नोति। अतः अतीतस्य वर्तमानाद् विरोधः भवतीति पूर्वं स्वीकृतः। परन्तु सांख्यवादिनः पदार्थानां **'नासतो विद्यते भावो नाभावो विद्यते सतः'** इति सिद्धान्तानुरोधेन एतत्स्वीकुर्वन्ति यद् यः तिरोभूतः अस्ति स एव वर्तमानकालोऽस्ति। सर्वे पदार्थाः एकस्मिन् प्रसेवके (बोरे में) अभ्यन्तरे स्थिताः स्युः। तत एव आत्मानं प्रकटयन्ति। तथा पुनः तस्मिन् एव (बोरे में ही) प्रलीयन्ते। हेलाराजानुसारमेतत् पञ्चाधिकरणदर्शनस्थसांख्याचार्याणामेतन्मतमस्ति।[3]

विचारोऽयं धर्मधर्मिणोः भेदमादाय प्रचाल्यते। धर्मी स्थायी सदैव स्थीयते। तस्या धर्माः त्र्यध्वान् सन्तः अतीतवर्तमानानागतस्वरूपे आविर्भूताः भवन्ति। ये च पुनः धर्मिणं धर्मात् अतिरिक्तं नैव स्वीकुर्वन्ति तेषां मते अपि धर्मिणः युगपदेव अतीतवर्तमानानागतव्यपदेशाः धर्मेण सम्भवाः सन्ति।

वर्तमानसमयेऽपि अतीतस्य केषाञ्चित् धर्माणां सत्वाद् अनागत इति व्यवहारो भवति अतः धर्मी सदा वर्तमानः सन्नपि धर्माणां त्रिप्रकारात्मकत्वात् त्र्यध्वानः अथवा कालत्रयात्मकः इत्युच्यते।

हेतुव्यापारेण यदा कश्चित् क्रियाकलापः प्रत्यक्षतां गच्छति तदा सः वर्तमानः इत्युच्यते। यदा च हेतुव्यापाराः समाप्तिं गच्छन्ति तथा किञ्चिदपि कर्तुं नावशिष्यते तदा पदार्थानामदर्शनं भवति। तस्मिन् काले सः अतीत इत्युच्यते। यदा च पुनः हेतवः अर्थक्रियायै चेष्टां न कुर्वन्ति तदा सः

---

१. यथा एकः पुरुषः एकस्यां स्त्रियां रक्तो न शेषासु विरक्तो भवति इति व्यासभाष्यम्-(३-१३)।

२. द्वौ तु तत्र तमोरूपावेकस्यालोकवत् स्थितिः।
अतीतमपि केषाञ्चित् पुनर्विपरिवर्तते।। इति काल समुद्देशे-५३। अस्याः व्याख्यायां हेलाराजो दृष्ट्व्यः, तत्र एतत् स्पष्टतरमस्ति।

३. एकस्य शक्तयस्तिस्त्रः कालस्य समवस्थितः।
यत्सम्बन्धेन भावानां दर्शनादर्शने सताम्।। इति वा. प. प. का. कालसमु. ४९, कारिका।

अनागत इत्युच्यते। एवम्प्रकारेण एकस्य एव उपाधिभेदात् विभिन्ननामानि भवन्ति। अत्र वृत्तिवैचित्र्यात् सांकर्यदोषोऽपि नास्ति। आविर्भावः तिरोभावश्च क्रमेण संघटितो भवति। दर्शनमदर्शनं च इदमेव वृत्तीनां व्यापारः। स च विलक्षणः अस्ति। वर्तमानशक्त्या दर्शनं तथा अतीतानागतशक्तिभ्यामदर्शनम् इत्येवम् एकः अपरं अबाधयन् एव घटितः भवति। अतः संकरो न सम्भवति। दृष्टावस्थायामदृष्टावस्थायां च धर्मी एक एवास्ति। यथा सत्वादसत्वो न भिद्यते अपितु सत्व एव तिरोभूतः सन् असत्वमित्युच्यते। अतः भावेभ्यः (पदार्थेभ्यः) शक्तेरनतिरिक्तत्वेऽपि तथा युगपद् अवस्थिततत्वेऽपि नास्ति सांकर्यम्। भर्तृहरिणा एतत् सर्वं स्वयमेव स्पष्टीकृतम्।[१] क्रियामादायापि कालभेदस्य मीमांसा क्रियते। व्याकरणदर्शनमस्मै मताय प्रश्रयं ददाति। तथाहि–

> तस्याभिन्नस्य कालस्य व्यवहारे क्रियाकृताः।
> भेदा इव त्रयः सिद्धा यॉंल्लोको नाति वर्तते।।[२] इति।

भूतभविष्यद्वर्तमानाः क्रियोपाधिकाः सन्ति। यदा क्रिया समुद्भूय ध्वस्ता भवति तदा उपाधिकालः भूत इत्युच्यते। यदा क्रियायाः साधनानि सन्निहितानि भवन्ति तथा तेषामारम्भः समीपे स्यात् तदा उपाधिकालः भविष्यति'ति व्यवह्रियते। यदा च क्रिया प्रारब्धा तु भवति परन्तु समाप्तिं न गच्छति तदा उपाधिकालः वर्तमान इति भवति।

ननु भूतायां क्रियायां सत्यां सा क्रिया काले भूतकालत्वं कथमानयति? एवमेव या क्रिया इदानीं न जाता सा काले भविष्यस्वरूपं कथं दर्शयिष्यति? इत्याशंकायामेवमुवाच भर्तृहरिः यत्–या क्रिया व्यतीता भवति सा काले स्वसंस्कारान् मुञ्चति।

बुद्ध्या स्मृत्या वा तेषां संस्काराणां ग्रहणं विधाय काले भूतकालव्यपदेशो भवति। एवमेव इदानीमसम्पन्नायाः क्रियायाः प्रतिबिम्बः काले प्रतिबिम्बतः भवति। तस्याः भाविन्याः क्रियायाः प्रतिबिम्बस्य काले अध्यारोप्य भविष्यत्कालः भवति। भर्तृहरिमतेन कालः स्वच्छादर्शमिव अस्ति। तथाहि–

> काले निधाय स्वं रूपं प्रज्ञया यन्निगृह्यते।
> भावास्ततो निवर्तन्ते तत्र संक्रान्तशक्तयः।।
>
> भाविनां चैव यद्रूपं तस्य च प्रतिबिम्बकम्।
> सुनिर्मिष्ट इवादर्शे काल एवोपपद्यते।।[३]

(क्रमशः....)

---

१. युगपद्वर्तमानत्वं तद्धर्मा प्रतिपद्यते।
केषाञ्चित् वर्तमानत्वाच्चैति तद्वदतीतताम्। इति वाक्यपदीयपदकाण्डकालसमुद्देशे–५४, कारिका।

२. वा. प. प. का. कालसमुद्देशकारिका–४८।

३. वा. प. प. का. कालसमु. ३९–४०।

# कठोपनिषदि शिक्षणनीतिः

डॉ. के. नारायणभट्टः

कृष्णयजुर्वेदे तैत्तिरीयमैत्रायणीयकठकपिष्ठलेति चतस्रः शाखाः साम्प्रतमुपलभ्यन्ते। वैशम्पायनर्षेः अष्टसु शिष्येषु कठनामकः अन्यतमः। तेन प्रवर्तिता कठशाखा। सः तस्याः प्रवर्तकः। कठशाखीयाः उपनिषद्भागः कठोपनिषदिति जगति प्रसिद्धा दृश्यते। सा च वेदान्तः "वेदान्तो नाम उपनिषत् प्रमाणं" इति साम्प्रदायिकवचनात्' कठशाखायाः अन्तिमभागत्वात् उपनिषदिति लोके प्रसिद्धत्वाच्च।

उप+नि+पूर्वकस्य 'क्विप्' प्रत्ययान्तस्य 'षदलृ' धातुना निष्पन्नस्य उपनिषच्छब्दस्य 'विद्या' इत्यर्थः समुदेति। अविद्याया विनाशकत्वात् ब्रह्मगमयितृत्वाद्वा। नचिकेतोपाख्यानमपि मुमुक्षून् ब्रह्मगमयती-त्यतः कठोपनिषदि ब्रह्मप्रधानः प्रतिपाद्यविषयः दृश्यते। अत एव अन्ये विषयास्तत्रानुषङ्गिकाः भवेयु नचिकेताः वैवस्वतः त्रीन् वरान् ययाच। यमोऽपि तत्पितृसन्तुष्टिप्रभृतिब्रह्मान्तान् विषयानुपदिदेशेत्यस्य कथासन्दर्भस्य सत्वात् अत्र विद्यासंप्राप्तिरूपस्य शिक्षणानुकूलस्य विषयस्यावश्यं भावित्वं परिकल्प्य तद्गवेषणार्थमत्र प्रवृत्तिर्विधास्यते। तस्य विद्याग्रहणादिविषयकत्वात् शिक्षणनीतिरिति नाम्ना. व्यवहारभाक् भवितुमर्हति।

का सा शिक्षणनीतिः, यस्याः गवेषणमत्र संभवेत् इति चेत् शृणु, विद्योपादानार्थकस्य 'शिक्ष' धातोः 'ल्युट्' प्रत्ययान्तान्तिपद्यते "शिक्षणं" इत्येषः शब्दः। ल्युट् प्रत्ययस्य भावार्थकत्वात् विद्योपादानार्थकत्वं "शिक्षण" पदस्य सिध्यति। शिक्षापदस्याऽपि तदेवार्थकत्वात् 'शिक्षण' मिति 'शिक्षा' व्यवहरन्तोऽपि लोके दृश्यन्ते।

शिक्षणनीतिरत्र जिज्ञास्यः विषयः। स च नीतिविषयपर्यालोचनेनैव संसाधितं भवतीति तदत्र विचार्यते। 'क्तिन्' प्रत्ययान्तेन प्रापणार्थकेन 'णीञ्' धातुना निष्पन्नः नीतिरिति शब्दः। प्रापणमत्र धात्वर्थः। 'क्तिन्' प्रत्ययस्य भावार्थकत्वात् प्रापणः, सदाचारः, मार्गदर्शनमिति वा नीतिशब्दस्यार्थः पर्यवस्यति। यदा तु करणाधिकरणत्वं वा प्रत्ययार्थस्य इष्यते तदा 'नीयन्ते संलक्ष्यन्ते उपायादयः ऐहिकामुष्मिकार्था वा स्यामनया वा' इति पर्यवस्यति। सांप्रतं शिक्षणनीतेः गवेषणीयत्वात् भावार्थकस्य करणार्थकस्य वा 'क्तिन्' प्रत्ययस्य योग अत्र वेदितव्यः। एवं च विद्योपादानं तदुपायादयो वा

'शिक्षणनीति' रित्यस्य पदसमुदायस्यार्थः पर्यवस्यति। तथा च कठोपनिषन्मन्त्रेषु शिक्षणनीतयः सन्ति न वा, सत्सु ताः स्वीकारयोग्याः भवन्ति न वा? साम्प्रतं ताभिः किं प्रयोजनमित्यादयो विषयाः विचार्यन्तेऽत्र। शिक्षणनीतिः विद्याग्रहणे विद्याप्रदाने च उपयुज्यमाना दृश्यते। अतः सा छात्राध्यापकयोः समाश्रिता भवेत्। छात्रनीतेः अध्यापकनीतेश्च गवेषणेन शिक्षणनीतिरन्विष्टाभवेदिति तदादौ छात्रानुसरणयोग्यां शिक्षणनीतिमन्विष्यामः। नचिकेताः अत्र विद्यायाः अभ्यर्थिः। यमश्च तदुपदेष्टा। अतः सः आचार्यः। बालकः नचिकेता यमसमीपं गत्वा विद्यामवापेति कठोपनिषन्मन्त्रसन्दर्भेणावगतत्वात्... "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिं श्रोत्रियं ब्रह्मनिष्ठम्" इत्यस्यां श्रुतौ "तद्विद्धिः प्रणिपातेन परिप्रश्नेन सेवया" इत्यत्र स्मृतौ च जिज्ञासुना गुरोरन्तिकं गमनीयमिति दर्शितत्वाच्च ज्ञानेच्छावता विद्यार्थिना गुरोः समीपं गत्वा विद्यामवाप्तव्यं न तु छात्रसमीपे गुरोर्गमनमित्येषः विद्यार्जनाविषयकः प्राथमिकः नियमः कठसन्दर्भादवगम्यते विद्यार्थिभिरनुसर्तव्येषु नियमेषु एषः प्रथमः।

नूतनशिक्षणप्रणाल्यां वर्तमानेषु सांप्रतिकेषु छात्रेषु एषः विधानः क्वचिदत्र दृग्गोचरो भवति। बाहुल्येन तु अस्य वैपरीत्यं पश्यामः। यश्च गुरोरन्तिकं गच्छति तज्जनितपरिश्रमः तस्यान्तःकरणस्य संस्करणे सहकारिः भवति। संस्कृतान्तःकरणं गुरूपदिष्टविषयग्रहणयोग्यतां सम्पादयति। यस्य तु समीपे गुरोर्गमनं तस्यान्तःकरणे तदभावात् संस्कृतत्वाभावाच्च सः न विषयावबोधनपटुत्वमनुभवति। तदिदानीमपि लोके बहुषु छात्रेष्ववगन्तुं शक्यते। अतः विद्यार्जननीतिषु एषा गुरुसमीपगमनात्मिका नीतिः प्रथमा अन्यतमा च।

विश्वजिद्यागमनुतिष्ठन् वाजश्रवसः गेदानार्थमानीयमानान् जीर्णान् गाः दृष्ट्वा तत्पुत्रः नचिकेताः 'मां कस्मै दास्यसीति' पौनः पुन्येन पितरं पंप्रच्छ। एषा बालकस्य लघुचेष्टा इति मत्वा कोपाविष्टः सः वाजश्रवसः 'त्वां मृत्यवे ददामीत्य' वोचत्। तच्छ्रुत्वा नचिकेता यमसमीपं जिगमिषु उद्युक्तः बभूव। तदा कोपनिरस्तेन पित्रा स्ववचनमनुस्मृत्य संतापमन्वभवत्। पित्रा वार्यमाणोऽपि नचिकेताः यमालयं गन्तुकामः पितरमेवमवोचत्। पितः त्वं पुत्रविरहतामनुलक्ष्य मा शोच। स्वपित्रादीनां वृत्तं अन्येषां साधुजनानां वृत्तं वावलोकय। तेषु मिथ्याचरणं वृत्तं नास्ति। मनुष्यः सस्यमिव जीर्णः जनिमाश्च भवति सत्यस्य नाशाभावात् त्वं सत्यमनुपालये' ति।

अनेन कथासन्दर्भावलोकनेन ज्ञायते नचिकेताः सत्यवादी सदाचारसंपन्नश्चासीदिति। श्रुतिः श्रावयति च "सत्यं वद" "सत्यान्न प्रमदितव्यं" इति। विद्यार्थिषु यदा गुरोः विश्वासमुदेति तदा सः शिष्यानुकम्पया तस्मै विद्यामुपदिशति। विश्वासाभावे न तथा। अतः विद्यार्थिनां सत्यपरिपालनं गुरोः विश्वासाविर्भवकारणं भवति। सच्चारित्रता इति तस्य नामान्तरं प्रसिद्धं लोके। सदाचारमित्यपि नार्थान्तरम्। "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं" इत्यनेन पदसन्दर्भेण सदाचारसंपत्या अर्जुनः भगवतः वासुदेवात् गीतामृतमवाप्य स्वकर्म युद्धमकरोदिति गम्यते। अपि च सदाचारः धर्मस्योत्पत्तिकारणमिति "आचार प्रभवो धर्मः" "धर्मं चर" "धर्मान्नप्रमदितव्यं" इत्येते स्मृतिश्रुत्यावुद्बोधयत्यः धर्मानुष्ठानं

विदधत्यः दृश्यते। सदाचारसम्पन्नता विद्यार्थित्वसंपादिका इत्यप्यवगन्तव्यम्। अतः श्रेयः कांक्षिभि-र्विद्यार्थिभिः सत्यवाक्परिपालनं कर्तव्यम्। सदाचारमनुपालनीयञ्चेत्येषः कठोपनिषदुक्तः छात्रबोधकः। इदानीमपि समाजे नूतनशिक्षणप्रणाल्या विचरत्सु केषुचिच्छात्रेषु सदाचारादयो दृग्गोचराः सन्ति। अपि च ते गौरवभाजः। तदन्ये विद्यया वञ्चिताः दृश्यन्ते। अतः सत्यसंभाषणं सदाचारं चेत्येतौ छात्रानुशीलन-योग्यौ शिक्षणनीतिरिति नामानौ भवतः।

नचिकेताः यमालयं प्राप्य तत्र यमस्यानुपस्थितिं ज्ञात्वा अनश्नन् तिस्रः रात्रीः तत्रोवास। गृहमागतः यमः तं ज्ञात्वा पापादिना समभ्यर्च्य एकैकां रात्रिं प्रति त्रीन् वरान् प्रार्थये त्यकथयत्।

नचिकेताः प्रथमेन वरेण स्वपितृसौमनस्यं द्वितीयेन स्वर्गसाधनमग्निविद्यां च प्रार्थयत्। यमः नचिकतसे तावयच्छदिति "वैश्वानरः प्रविशत्यतिथिः ...... हरवैवस्वतोदकम्। इत्यारभ्य "एतमग्निं तवैव प्रवक्ष्यन्ति जनासः" इत्यन्तैरुपनिषन्मन्त्रैरवगम्यते।

अनेन सन्दर्भेणेदं ज्ञातव्यं भवति यत् 'जनिमात्रेण मानव ऋणत्रयेण संबन्ध्यते तदपाकरणं पुत्रस्याद्यं कर्तव्यं भवतीति। गृह्यसूत्रकारश्च "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् भवति" इत्यकथयत्। स्मृतिरपि "ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत्" इति स्मारयति। पितृर्ऋणात् उन्मोचनार्थं पुत्रेण मया पितृसन्तृप्तिकर्म कर्तव्यं भवतीति सः प्रथमेन वरेण स्वपितृसन्तुष्टिमयाचत्। तथा च मन्त्रः "शान्तः सङ्कल्पः सुमनायथास्यात्" इति। अपि च मानवः जनिं लब्ध्वा जगति समाजमाश्रित्य जीवति। न तेन विना जीवितुं शक्नोति। अतः स समाजऋणवांश्च भवति। तेन तदपाकरणार्थं समाजसेवा अनुष्ठेया भवति। नचिकेताः समाजऋणोन्मोचनार्थमग्निविद्यां स्वर्गसाधिकां द्वितीयेन वरेण यया च। अनेन नचिकेताग्न्युपासनेन साधका अलौकिकं स्वर्गसुखमैहिकसुखं चानुभवन्तु। तदाहं समाजऋणादुन्मुक्तो भवेयमिति।

अनेन सन्दर्भेण ज्ञातव्यं यत्–गुरुण्यविद्यां संपाद्य स्वकुलस्य सन्तारकं समाजोद्धारकं च कर्म छात्रैर्यदानुष्ठीयते तदा सुखी समाजः भविष्यति। नो चेत् सामाजिकाः दुःखभाजः भवेयुरिति। अतः स्वकुलोद्धारकं समाजोद्धारकञ्च कर्म छात्रैरनुष्ठेयमित्युपदिशत्येषा उपनिषत्। छात्रानुसन्धेययोग्यत्वात् चैतत् शिक्षणनीतिष्वन्यतमा च भवति। मृत्युना उपदिष्टामग्निविद्यां नचिकेताः अनूच्चारयत्। नचिकेतसः ग्रहणधारणपटुत्वमनुभूय सन्तुष्टः मृत्युः नचिकेतसः नाम्ना अग्निविद्याप्रसिद्धिं रत्नमयीं मालां च चतुर्थेन वरेण तमयच्छदिति "तमब्रवीत्प्रीयमाणो महात्मा ....... अनेकरूपां गृहाण" इत्यन्तेन मन्त्रेण ज्ञायते। ग्रहणधारणपटुत्वं छात्रत्वधर्मसंपादकम्। अतः विद्यार्थिभिस्तदनुपालनीयं भवति। शिक्षणविषयत्वाच्च तास्वन्यतमा चैतत्।

यमलोकं गतेन नचिकेतसा यमस्यानुपस्थितिं मत्वा अनश्नन् तत्रैव त्रिरात्रिं यापयामासेति "तिस्रो रात्रीर्यदवात्सीर्गृहे मे ...... वृणीष्व" इत्यस्मात् मन्त्रादवगम्यते। नचिकेताः जिज्ञासुः। तस्य

ज्ञानेच्छायाः तीव्रतमत्वात् व्रतनियमादयः तस्य जिज्ञासुत्वं परिपोषयेयुः। एवमेव व्रतनियमादिसंपन्नः जिज्ञासुः स्वप्रवृत्तिविषयं ज्ञानं लप्स्यते। अतः छात्रेभ्यो एषः विषयः संगृहणीयः शिक्षणनीतिष्वन्यतमत्वतस्य लभते।

"येयं प्रेते विचिकत्सा ..... एष्वरस्तृतीयः" इत्यस्मिन् मन्त्रे नचिकेताः तृतीयेन वरेणात्मविद्यां ययाच इत्यवगम्यते। तदा यमः अकथयत् आत्मा सुसूक्ष्मः। अतः दुखगमत्वात् तं देवाऽपि न जानन्ति। तस्मात् त्वं तमात्मानं विहायान्यं दीर्घायुः प्रभृति यमिच्छसि तं वृणीष्वाऽहं प्रदास्य इति नचिकेतसमलोलुपत् चेति "शतायुषं पुत्र पौत्रान्वृणीष्व..... इच्छसि इत्यादिमन्त्रसन्दर्भेणाभिव्यज्यते। अनेन ज्ञायते यत् विद्यार्थिषु निश्चलमनस्कत्वमपेक्षत इति। निश्चलमनसः युक्तेन पतञ्जलिना असंप्रज्ञाताद प्राप्तत्वात् "चञ्चलं हि मनः कृष्ण प्रमाथि बलवदृढं" इति चञ्चलमनसः विषयग्रहणायोग्यतादर्शितत्वाच्च विषयपरिग्रहणार्थं निश्चलमनस्कत्वं वरमित्यावेद्यते। तेन हि ग्रहणधारणपटुत्व लप्स्यते। तच्च विद्यार्थित्वलक्षणेष्वन्यतमम्। निश्चलस्वभावस्य दर्शितत्वात् शमदमादयोऽप्यत्र सङ्गता इति जानीमः। अतः विद्यार्थित्वस्य संपादकं शिक्षणनीतिष्वन्यतमं निश्चलमनस्कत्वं अनेन कठोपनिषत्संदर्भेण संधिनुयामः। एवं छात्रनीतेरन्विष्टत्वादध्यापकनुशीलनयोग्यां शिक्षणनीति पश्चाद्भाविनीमत्रान्विष्यते। अध्यापनकर्त्ता अध्यापकः शिष्यादिभ्यो विद्यावबोधनमध्यापनम्। बोधकः अध्यापनकलाभिज्ञश्चेत् छात्रान् बोधयितुं शक्नोति। छात्राश्च विषयावगाहनं कर्तुं पारयन्ति। न चेत् तेन विमुखाः भवेयुः। अतः शिक्षणक्षेत्रे अध्यापकस्य गरिमा वरीवर्ति। अतस्तदत्रान्विष्यामः।

आत्मविद्यावबोधकत्वादत्र यमः अध्यापकपदभाग्भवति। सः नचिकेतसः प्रार्थनामनुसृत्य पितृसंतृप्त्यादि अग्निविद्यान्तान्विषयानुपदिदेशेत्यवोचाम। यदात्वात्मविद्यां प्रार्थयति नचिकेतास्तदा यमः स्त्रीपुत्रपौत्रादीन् असदृशान् भोगान् दास्यामि आत्मविद्या विमुञ्चेत्यकथयत्। अनेन ज्ञायते यत् यमः नचिकेतसं परीक्षितवान् इति। अन्ते च तस्मै तमात्मानमुपदिदेशे त्यवगतत्वाच्च। नचिकेतसि योग्यतां विज्ञाय यमः तस्मै आत्मानमुपदिदेशे त्यर्थः। अतः अर्थित्वयोग्यतावगमिका शिष्यपरीक्षा अवश्यानुसन्धेयां ज्ञेया।

सा हि गुर्वनुसर्तव्यासु शिक्षणनीतिष्वन्यतमा।

यदि शिष्ययोग्यतां न परीक्षेत तेन अयोग्योऽपि विद्यावान् भवेत्। तदा स विद्यां अनर्थाय प्रयुञ्ज्यात्। तेन साधुसज्जनाश्च दुःखभाग्भवेयुः। यथा सांप्रतं मुम्बैनगरस्था हिंसघटना। ते हिंसकाः अयोग्याः। तथापि केनापि प्रकारेण गणकयन्त्रविज्ञानं ज्ञात्वा तैः अभूतपूर्वा हिंसा समायोजिता इति समाचारपत्रात् वयं सर्वे जानीमः। तथैवान्येऽपि गणकयन्त्रविज्ञानिनः सन्तिभारते देशे। ते तथा न। अपितु भारतदेशस्य कीर्ति प्रसारकाः सन्ति। अतः योग्यतावत्सु संप्राप्तविद्या सत्फलवत्री भवेदिति तदवगत्यर्थं छात्रपरीक्षा प्रथमा शिक्षणनीतिः भवति। तदनयोपनिषदा लप्स्यामः।

क्वचिदत्र योग्यतावान् सदाचारसम्पन्नोऽपि विद्यया वञ्चित इति श्रूयते दृश्यते च। सा वञ्चना गुरुकर्तिका। तयापि अनर्थः संभविष्यत्येव। अतः सापि न कर्तव्या इति अनया आत्मविद्यो-पदेशाख्ययावगम्यते। यथा यमः नचिकेतसं परीक्ष्य आत्मावगतियोग्यतां तत्र विज्ञाय तस्मै आत्मविद्यामुपदिदेशेति "तंदुर्दर्शं गूढमनुप्रविष्टं.....जहाति" अनेन मन्त्रेण विज्ञायते। अपि च अयोग्येष्वप्रदानेन यथा विद्यायाः संरक्षणं श्रूयते तथा योग्येभ्यो संप्रदानेन चेति "उपसन्नायतु निब्रूया ओ वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा" इत्यस्मात् यास्कवचना विज्ञायते। अतः सच्छिष्याय....विद्याप्रदानं गुरोः कर्तव्यंभवतीति इमां शिक्षणनीतिमस्मादुपनिषदः संलप्यस्यामः।

एतावता सन्दर्भेण समाकलिताः शिक्षणनीतयः आधुनिकशिक्षणक्षेत्रस्थान् दोषान् निःस्सारणसमर्थाः सन्तीति भावयामः। पिपठिषवः उपरितनान् विषयानवगाह्य स्वनुष्ठानतत्पराः यदि भवेयुस्तदा समाजस्य समुन्नतिरवश्यं भावीति कल्पयामः। अतस्सर्वे कठोपनिषदध्ययनं कृत्वा तत्रस्थान् सद्विषयान् हंसक्षीरन्यायेन परिगृहन्त्विति मदीया निवेदना।

# उपनिषत्सु मूल्यपरकशिक्षायाः विचारः

डॉ. कम्भम्पाटिः साम्बशिवमूर्तिः

लोके मानवः किमपि कार्यं करोति चेच्छुभकर्म इति, स एव अन्यं कर्म करोति चेदशुभकर्मेति उच्यते। किमर्थमेवमुच्यते इति विषयः विचारणीयोऽस्ति। यदा मानवाः सर्वे मिलित्वा कार्यं कर्त्तुमारभन्त तदारभ्येयं भावनोद्भूताऽभवत्। ततः नीतिशास्त्रस्य प्रादुर्भावो जात इति पाश्चात्यविदुषां विचारः। शुभाशुभं स्वीकृत्य नीतिशास्त्रमग्रे सरति। ये शुभाशुभ- उचितानुचित-कर्त्तव्याकर्त्तव्यादयः नैतिकप्रत्ययाः सन्ति।

उपनिषच्छब्दस्य अर्थः –

उप, नि इत्युपसर्गपूर्वक्-षदलृ-विशरणगत्यवसादनेषुइत्यस्माद्धातोः उपनिषच्छब्दः निष्पद्यते।

**( अ ) अमरकोशे–**

**धर्मे रहस्युपनिषत्स्यात्** इति प्रतिपादयन् धर्मे तथा रहसि इति द्वयोरर्थयोः उपनिषच्छब्दस्य प्रयोगो भवतीति निरूपितम्।[1]

**( आ ) अष्टाध्याय्याम्–**

**जीविकोपनिषदावौपम्ये** इत्यत्र उपनिषच्छब्दः रहस्यार्थे प्रयुक्तोऽस्ति।[2]

**( इ ) शैवभाष्यभूमिकायाम् –**

**उपनिभ्यां सदेर्धातोः क्विपि चोपनिषन्मता।**
**अन्तर्भावितणयन्तस्य सदेर्विशरणादिषु।।**

**केचिन्नर्थेषु मन्यन्ते इदं रूपं तु संभवात्।**
**अनया ब्रह्मसामीप्यमुपवेष्टुं हि साधकाः।।**

---

१. अमरकोशे -

२. अष्टाध्यायी १-४-७९

अर्हा भवन्ति क्षिप्रं यत् तेनैवोपनिषन्मता।
यद्वा सामीप्यमायातां सर्वभावेन वै नृणाम्।।

शिथिलतिदुःखानां समूहं प्रथमं यतः।
अविद्याहेतुकान् क्लेशान्, निषादयति तत्क्षणात्।।
ततो गमयति ब्रह्म तेन सोपनिषन्मता।।[१]

**(ई) शब्दस्तोमनिधौ –**

उपनिषद्यते प्राप्यते ब्रह्मविद्या अनया इति न्यरूपयत्।

**(उ) मुण्डकोपनिषदि –**

य इमां ब्रह्मविद्यामुंपनयत्यात्मभावेन श्रद्धाभक्तपुरः सराः सन्तस्तेषां गर्भजन्मजरारोगाद्य-नर्थपूगं निशातयति परंब्रह्म वा गमयति, अविद्यादिसंसारकाञ्चात्यन्तमावसादयति विनाशयतीत्युपनिषत्।[२]

इदानीं मूल्यपरकशिक्षायाः स्वरूपादिविषये किञ्चिद्विचारयामः–

**मूल्यपरकशिक्षायाः स्वरूपम्–**

मूल्यपरकशिक्षायाः तात्पर्यमिदं वर्त्तते यत् शिक्षणेन यस्मिन् अस्माकं नैतिक-सामाजिक-सांस्कृतिकमूल्यानि समाहितानि भवन्ति। प्रतिविषयं मूल्यपरकं कृत्वां तस्य माध्यमेन विविधप्राचीन-अर्वाचीनजीवनमूल्यानि छात्राणां व्यक्तित्वे समाहितानि करणीयं वर्त्तते। अनेन शिक्षार्थिनां सन्तुलित-सर्वतोमुखविकासो भवितुमर्हति।

**अवधारणा–**

मूल्परकशिक्षायाः इयमवधारणा अत्यन्तमावश्यकी वर्तते। परम्परागतरूपे अस्या एव धार्मिकशिक्षा, नैतिकशिक्षा इत्यपि नामान्तराणि च भवन्ति। वस्तुतः मूल्यशब्दः एका वैदेशिकशब्दः। आङ्ग्लभाषायाम् अस्य वैल्यू इति पर्यायपदं भवति। वैल्यू, एजुकेशन् इति शब्दद्वयं स्वयं भ्रमं जनयति यथा भाषायाः परिसीमाधारेण अस्य शब्दस्य द्वौ अर्थौ सम्भवतः। यथा–

१. मूल्यानां शिक्षा

२. मूल्यसमाहितशिक्षा अथवा मूल्यपरकशिक्षा।

---

१. शैवभाष्यभूमिकायाम्
२. मुण्डकोपनिषद्भाष्ये

द्वयोः अर्थयोः कः अर्थः ग्राह्यः, कः अर्थः अग्राह्यः इति विषयं विविधनैतिक-सामाजिक-आध्यात्मिकमूल्यानां शिक्षेतिहासे, भूगोले, जीवशास्त्रे आधारितो भवति। आधुनिकभारतसन्दर्भे वैल्यू एजुकेशन् इति शब्दस्य अयमेवार्थः मूल्यपरकशिक्षारूप एवार्थः ग्राह्यो भवति।

**मूल्यपरकशिक्षायाः सिद्धान्ताः –**

१. मूल्यपरकशिक्षणं धार्मिकशिक्षणात् भिन्नं भवति।

२. अत्र कोऽपि स्वतन्त्रविषयः न भवति।

३. मूल्यपरकशिक्षायाः समन्वयः, सहसम्बन्धश्च विविधविषयैः सह मनोवैज्ञानिकरूपे स्थापनीयो वर्त्तते।

४. संविधाने निर्देशितमूल्य तथा सामाजिक-उत्तरदायित्वं मूल्यपरकशिक्षायाः मुख्यं लक्ष्यं भवति।

५. अस्माकं वर्तमानशिक्षणव्यवस्था सामाजिकव्यवस्थायाः उपाङ्गो भवति। अतः मूल्य परकशिक्षणं समाजस्य आर्थिक-सामाजिकव्यवस्थासन्दर्भे कार्यान्वितं भवेत्।

**उद्देश्यानि–**

१. छात्रेषु सत्यम्, सहयोगः, प्रेम, करुणा, शान्तिः, अहिंसा, साहसं, समानता, स्वतन्त्रता, सौभ्रातृता, श्रमगरिमा – इत्येतेषां मौलिकगुणानां विकासः।

२. वैयक्तिक सामाजिकजीवने उत्तमनागरिकनिर्माणस्य प्रशिक्षणज्ञानप्रदानम्।

३. धर्मनिरपेक्षता, प्रजातन्त्रम् इत्यादिराष्ट्रियलक्ष्याणां विषये बोधनम्।

४. देशसय सामाजिक-आर्थिक-परिस्थितीनां जागरणम्।

५. राष्ट्रियलक्ष्याणि प्रति रुचेः जागरणम्।

६. विचारे, व्यवहारे च यथा उदारो भवति तथा विद्यार्थिनं प्रति प्रेरणाप्रदानम्।

७. अधोदत्तविषयान् प्रति समुचितदृष्टिकोणस्य विकासः।

(क) स्वयं तथा सुहृदं प्रति। (ख) स्वदेशं प्रति। (ग) अन्यदेशवासिनं प्रति।

(घ) जीवनं प्रति। (ङ) पर्यावरणं प्रति। (च) धर्मं प्रति।

(छ) संस्कृतिं प्रति।

